THE

# UTTARA-RĀMACHARITA

OF

# BHAVABHŪTI

With the Commentary of Vīrarāghava.

EDITED BY

T. R. RATNAM AIYAR, B. A.

FORMERLY PROFESSOR OF MATHEMATICS AND SANSKRIT

S. P. G. COLLEGE, TRICHINOPOLY.

Ninth Edition

REVISED WITH VARIOUS READINGS ETC.,

BY

NĀRĀYAṆ RĀM ĀCHĀRYA, "KĀVYATĪRTHA."

PUBLISHED BY

PĀṆḌURAṄG JĀWAJĪ,

PROPRIETOR OF THE 'NIRṆAYA SĀGAR' PRESS,

BOMBAY.

1939.

*Price 1 Rupee.*





॥ श्रीः ॥

महाकविश्रीभवभूतिप्रणीतं

# उत्तररामचरितम् ।

## वीरराघवकृतया टीकया समेतम् ।


टी. आर्. रत्नम् ऐयर्, बी. ए.,

इत्यनेन संस्कृतम् ।



नवमं संस्करणम्



श्रीमदिन्दिराकान्तचरणान्तेवासिना

**नारायण राम आचार्य "काव्यतीर्थ" इत्यनेन**

**पाठान्तरादिभिः समलङ्कृत्य संशोधितम् ।**



तच्च

**मुम्बय्यां**

**पाण्डुरङ्ग जावजी इत्येतैः,**

स्वीये निर्णयसागरमुद्रणयन्त्रालये मुद्रापयित्वा प्रकाशितम् ।

शाके १८६० वत्सरे, सन १९३९.

**मूल्यं १ रूप्यकः ।**




॥ श्रीः ॥

# उत्तररामचरितम् ।

प्रथमोऽङ्कः ।

इदं कविभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे ।
वन्देमहि च तां वाणीममृतामात्मनः कलाम् ॥ १ ॥

तलस्पर्शिनी ।

पुरि भुवि महितायां भूमिसाराभिधायामधिमुनिभृगुतीर्थोपान्तमाबद्धखेलम् ।
किमपि नतशरण्यं मङ्गलं मङ्गवल्लीजगदधिपतिसंज्ञं द्वन्द्वमानन्दयेन्नः ॥

ज्ञानं सर्वपराधीनं तद्धेतुश्चेद्धयाननः ।
स चेद्भक्तपराधीनस्तं विना कं व्रजाम्यहम् ॥
भूसारपुरवास्तव्यो वाधूलो वीरराघवः ।
भवभूतिकृतिं हृद्यां व्याचष्टे करुणामयीम् ॥
भवभूतेः कवीन्द्रस्य क्व गम्भीरो गिरां भरः ।
क्व मन्मतिरतिस्थूला सहायोऽत्र हयाननः ॥
चापल्यमथवा बाल्यं कृतावस्यां प्रवर्तकम् ।
तथापि कृपया सन्तः संतन्वन्तां शुभां दृशम् ॥

अथ तत्रभवान्भवभूतिर्नाम कविकण्ठीरवः 'एकः शब्दः सम्यग्ज्ञातः सुष्टुप्रयुक्तः स्वर्गे लोके कामधुग्भवति, इत्यादिश्रुत्या परिनिष्ठितशब्दप्रयोगस्य धर्मत्वमवगच्छन् 'काव्यं यशसेऽर्थकृते' इत्यादिना काव्यरूपस्य तस्य प्रकर्षं विभाव्य, 'शैवा वयं न खलु तत्र विचारणीयं पञ्चाक्षरीजपपरा नितरां तथापि । चेतो मदीयमतसीकुसुमावभासं स्मेराननं स्मरति गोपवधूकिशोरम् ॥' इत्यादिन्यायेन अङ्कुरितभगवद्भक्तिकतया 'स वाग्विसर्गो जनताघविप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि । नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥' इत्यादिन्यायेन 'प्रबन्धानां प्रबन्धृणामपि कीर्तिप्रतिष्ठयोः । मूलं विषयभूतस्य नेतुर्गुणनिरूपणम् ॥' इत्यादिन्यायेन च भगवद्गुणान्विवक्षुः, तत्रापि 'यदि क्षुण्णं पूर्वैरिति जहति रामस्य चरितम्' इत्यादिन्यायेन रामकथां प्रतिपिपादयिषुः, दृश्यस्य श्राव्यापेक्षया 'देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषम्' इत्युक्तनाट्याश्रयत्वप्रयुक्तप्राधान्यात्प्रकरणादीनां यथायथं रसवस्तुनायकापकर्षात्तत्प्रकर्षान्नाटकं चिकीर्षुः, पूर्वचरितस्य महावीरचरितत्वेन वर्णितत्वात् उत्तरं चरितं वर्णयितुमभिसंधाय पूर्वरङ्गप्रधानाङ्गभूतां नान्दीमाह—**इदं कविभ्य इति**। 'इदं' 'कविभ्यः' इति पदद्वयमिदम् । अतो द्वादशपदत्वसिद्ध्या न नान्दीपदनियमभङ्गः । इदमिति चोद्देश्यसमर्पकं द्वितीयान्तं विशेष्यवाचकम्, नमोवाक-

१ 'विन्देम देवतां', 'वन्देम देवतां वाचं' इति पा० ।

मिति च विधेयसमर्पकं विशेषणवाचकं च। तथा च—इदं प्रारिप्सितग्रन्थादौ चिकीर्षितत्वेन बुद्धिस्थं मङ्गलं पूर्वेभ्यः कविभ्यो नमोवाकं प्रशास्महे। पूर्वकालप्रसिद्धप्राचेतसादिकविविषयकनमउक्तिं निर्दिशामः—इति वाक्यार्थः। 'प्रशासनं तु निर्देशः' इति कोशः। 'आङः शासु इच्छायाम्' इति धातोः आङ्पूर्वकत्वं प्रायिकमित्युक्तेः प्रपूर्वकत्वेनेच्छार्थकत्वं च। 'नमउक्तिर्नमोवाकः' इति कोशः। भावे घञ्। कुत्वम्। एतन्मङ्गलोद्देश्यपूर्वककविविषयकनमउक्तिविधेयकबोधजनकशब्दप्रयोगवानहम्, एतन्मङ्गलोद्देश्यकपूर्वकविविषयकनमोवाकविधेयकेच्छावानहम्, इत्यन्वयबोधः। नमोवाकमित्यत्रैकदेशनमःशब्दापेक्षया कविभ्य इति चतुर्थी। 'नमःस्वस्ति–(२।३।१६)' इत्याद्यनुशासनात्। अत्र नान्दीप्रभृतिप्रशस्तिरूपचरमाङ्कपर्यन्तस्य कर्तव्यस्य बुद्धिस्थत्वेऽपि प्रत्यासत्तिन्यायान्नमोवाकमिति विधेयानुसाराच्च मङ्गलस्यैव इदंपदेन विवक्षा। इदमिति च सामान्ये नपुंसकम्। नमोवाकमिति तु पुंलिङ्गम्। तथा च— शुक्तिं रजतं जानातीत्यादाविव विशेष्यनिष्ठत्वाभावेन समानलिङ्गत्वाप्रसक्त्या न तद्बाधरूपदोषः। इदं नमोवाकमित्यत्र नमोवाकमित्यस्य विशेष्यवाचकत्वमभ्युपगम्य तद्विशेषणवाचकस्य इदंपदस्य 'सामान्ये नपुंसकं' (२।४।१७ वा.) इति नपुंसकत्वाश्रयणे तु विशेष्यविशेषणवाचकपदयोः समानलिङ्गत्वं बाधितव्यमित्यस्वारस्यम्। इदंपदप्रयोजनं च मृग्यं स्यात्। उक्तरीत्याश्रयणे तु मालतीमाधवादौ अन्यादृशमङ्गलेच्छायामपि एतन्नाटककर्तव्यमङ्गलं पूर्वकविविषयकनमोवाकमिच्छाम इत्यर्थलाभेन सप्रयोजनत्वम्, विशेष्यविशेषणवाचकयोः समानलिङ्गत्वबाधाभावश्चेति न दोष इति बोध्यम्। अत्र पूर्वेभ्यः कविभ्यो नमोवाकमिदं प्रशास्महे इति योजयित्वा पूर्वकविविषयकनमोवाकरूपमेतन्मङ्गलमिच्छाम इत्युद्देश्यभावविरहेण पक्षान्तरमपि। अत्रापि इदमिति सामान्ये क्लीबम्। नमोवाकमिति च पुंलिङ्गमेव। 'राज्यश्रीप्रथमावतारपदवीमारुह्य सिंहासनम्' इत्यादाविव विशेष्यनिष्ठत्वाभावेन समानलिङ्गकत्वप्रसक्तेः। अमात्यानुवर्तनपुरःसरराजदर्शनन्यायेन गुणकृतात्मसंस्कारः प्रधानोपकाराय महते प्रभवति। तत्र गुणोऽपि संस्कारमनुभवतीति न्यायेन, कविनमस्कारानन्तरं वाणीं नमस्करोति—**वन्देमहीति**। एतेन अनुग्राहकवाणीनमस्कारात्पूर्वमनुग्राह्यप्राचेतसादिनमस्कारायोग इत्यपास्तम्। 'भगवद्वन्दनं त्वाद्यं गुरुवन्दनपूर्वकम्' इति विधेश्च। 'मधुमयफणितीनां मार्गदर्शी महर्षिः' 'काव्यज्ञशिक्षयाभ्यासः' इति च प्राचेतसादीनां गुरुत्वानपायाच्च। तां प्रसिद्धां पूर्वोक्तनमस्कारार्हत्वेन बुद्धिस्थामिति वा। अमृतां शाश्वतीम्। 'यज्ञशेषसुधामोक्षेष्वमृतं शाश्वते त्रिषु' इत्यभिधानात्। अत्र यज्ञशेषसुधामोक्षस्वरूपेति कश्चित्। तन्न। अमृतामिति स्त्रीत्वालाभात्। तल्लाभेऽपि स्वरूपामित्यर्थालाभात्। आत्मनः परमात्मनः श्रियःपत्युः कलामंशभूताम्। विग्रहाध्याये तथा प्रतिपादनात् हयग्रीवांशत्वाच्च। तदुक्तमाचार्यैः—'दाक्षिण्यरम्या गिरिशस्य मूर्तिर्देवी सरोजासनधर्मपत्नी। व्यासादयोऽपि व्यपदेश्यवाचः स्फुरन्ति सर्वे तव शक्तिलेशैः॥' इति। वाणीं वन्देमहि च प्रणमाम च। वन्दतेर्लिङ्युत्तमपुरुषबहुवचनम्। पूर्वोक्तप्रशासनसमुच्चायकश्चकारः। अत्र पूर्वार्धे सर्वलोकनमस्कार्याः पूर्वकालप्रसिद्धाः प्राज्ञाः केचिद्वर्ण्या इति सूच्यते। लोकनमस्कार्या इत्यनेन धूर्तवर्ण्यकभाणादिव्यावृत्तिः। पूर्वेत्यनेन कल्पितवर्ण्यकप्रकरणादिव्यावृत्तिः। भरतस्य च काप्य-

वर्णनात् रामलक्ष्मणशत्रुघ्नानां त्रयाणामेव कथांशोपयोगित्वेनात्र बहुवचनस्य कपिञ्जलाधिकरणन्यायेन त्रित्वपर्यवसानमव्याहतम् । कविभ्य इत्यनेन यथा कविषु वाल्मीकेराद्यत्वेन प्राधान्यम्, अन्येषामानन्तर्यादप्राधान्यम्, एवं तत्सूचितवर्ण्यानां मध्ये रामचन्द्रस्य वर्णनायां ज्येष्ठत्वेन प्राधान्यं लक्ष्मणादेश्चाप्राधान्यमिति सूचितम् । एवं च नानेकनेतृत्वप्रत्युक्तनाटकत्वहानिः । अत एव लक्ष्मणशत्रुघ्नयोरुपसर्जनत्वावगमात् सीतापरित्यागे लक्ष्मणप्रेषणस्य, लवणवधार्थं शत्रुघ्नप्रेषणस्य च ध्वननात्प्रथमाङ्कार्थः सूच्यते । उत्तरार्धे प्राज्ञी काचन स्त्री वर्ण्यत इति सूचितम् । आत्मनः कलामित्यनेन, तस्या देवतांशसंभवत्वं कस्यचिद्धर्मपत्नीत्वं च सूच्यते । 'अर्धो वा एष आत्मनो यत्पत्नी' इति पत्न्या अवयवत्वोपचारात् । कलाशब्दस्यावयववाचित्वात् । अत एव नायकस्यापि देवतांशसंभवत्वं सूच्यते । देवतांशसंभूतस्त्रियं प्रति तादृशस्यैव नायकस्यौचित्यात् । अमृतामिति मरणस्य प्रसक्तिपूर्वकप्रतिषेधाद्गङ्गापतनसंभावितस्य सीतामरणस्य गङ्गापृथिवीभ्यां सह तदागमनेन भावनिश्चयरूपो द्वितीयाङ्कप्रभृतिसप्तमाङ्कान्तार्थः सूच्यते । नमस्कारसमुच्चयेन समप्राधान्यावगमाच्छाकुन्तलादाविव नासाध्याया वर्ण्यत्वम् । अपि तु साध्याया एव वर्ण्यत्वमिति सूच्यत इति सुधियो विभावयन्तु ॥ अस्य श्लोकस्य योजनान्तरमपि—**इदमित्यादि** । 'इदंकविभ्यः' इत्येकं पदम् । 'नमः' 'वाकम्' इति च पदद्वयम् । एतेन द्वादशपदत्वसिद्ध्या न नान्दीनियमहानिः । अयमर्थः—पूर्वेभ्यः प्राचीनेभ्य इदंकविभ्योऽस्या बुद्धिस्थरामकथायाः कविभ्यः । रामकथासंबन्धिकविभ्य इत्यर्थः । वाल्मीकिवसिष्ठादिभ्य इति तदर्थः । कथाया बुद्धिस्थत्वात् 'पाप्मभ्यश्च पुनाति वर्धयति च श्रेयांसि सेयं कथा' इत्युपसंहारे वक्ष्यमाणत्वाच्च इदंशब्देन परामर्श इत्युपपन्नम् । प्राथमिककथादर्शित्वरूपमुपकारं ख्यापयितुं पूर्वेभ्य इत्युक्तम् । कथान्तरकविनमस्कारे प्रयोजनाभावात् इदंकविभ्य इत्युक्तम् । उच्यतेऽनेनेति वाकमुक्तिसाधनीभूतम् । कवेर्वश्यवाक्त्वेऽपि प्रारिप्सितग्रन्थसमाप्तौ कविनमस्कारस्य साधनत्वे तात्पर्यम् । करणे घञ् । तस्य चोपदेशाप्रवृत्तावित्यत्रैव बाहुलकत्वम् । अन्यथा ल्युटा भाव्यम् । 'संज्ञायामिति च प्रायिकम्' इत्युक्तत्वान्न दोषः । यद्वा उच्यते यत्तत् वाकम् । कर्मणि घञ् । 'अकर्तरि च कारके—'इत्यनुशासनात् वाचिकं नमः प्रशास्महे इच्छामः निर्दिशाम इति वा । तां पूर्वोपस्थिताम् । प्रवृत्तिनिमित्तविधयास्याः कविपदेनोपस्थितेः । अमृतामानुपूर्व्यान्नित्याम् । शब्दस्य नित्यत्वपक्षे स्वरूपेण नित्यामित्यर्थः । यद्वा अमृतं मोक्षस्तदस्या अस्तीत्यमृता ताम् । मत्वर्थीयोऽच्प्रत्ययः । तेन स्त्रीत्वोपपत्तिः । प्रयोजकतासंबन्धेन मोक्षवतीमित्यर्थः । रामायणादिना मोक्षप्रयोजकत्वं च 'एकैकमक्षरं पुंसां महापातकनाशनम्' इति स्फुटम् । अत्र हेतुमाह—आत्मनः कलां परमात्मप्रतिपादकविद्याम् । 'विद्यायां कालभेदे च मुक्तौ शिल्पे कलेति च' इति वैजयन्ती । रामायणादिकाम् । परमात्मप्रतिपादकत्वं च 'वेदवेद्ये परे पुंसि' इत्यादौ स्पष्टम् । रामायणाध्यात्मरामायणरूपां वन्देमहि प्रणमाम । 'विषयमङ्गलद्वयसंग्रहो विजयते' इति बालरामायणनाटके स्फुटम् । अस्यां योजनायां पूर्ववत्काव्यार्थसूचनं बोद्धव्यम् । केचित्तु—'इदम्' इति भिन्नपदम् 'नमः वा कं' इति च पदत्रयम् । कविभ्य इदं नमः प्रशास्महे इत्यन्वयः । वाशब्दः समुच्चयार्थः । कमित्यस्य ब्रह्माणमित्यर्थः । एवं च वाणीं

सरस्वतीं देवीं कं वा ब्रह्माणं च वन्देमहि च प्रणमाम च। क्रियाद्वयसमुच्चायकश्च-कारः। वन्दनक्रियानिरूपितकर्मद्वयसमुच्चायकस्तु वाशब्दः–इत्यादि, तन्न। व्यवहितान्वयात्। 'यत्राष्टभिर्द्वादशभिरष्टादशभिरेव वा। द्वाविंशत्या पदैर्वापि सा नान्दीति प्रकीर्तिता॥' इत्यत्र चतुर्दशपदानुक्तेश्च। अन्ये तु–'पूर्ववदेव पदानि। इदं नमो वा पूर्वेभ्यः कविभ्यः कं प्रशास्महे। तां वाणीं वन्देमहि' इत्यन्वयमुक्त्वा 'इदं नमो वा पूर्वेभ्यः कविभ्यः अन्यं कं प्रशास्महे तामेव वाणीं वन्देमहि। इतः प्राचीनं नमः पूर्वकविभ्यः। अन्यं प्रति न कृतमेव। इदं वा तदन्यं वा कं प्रति प्रशास्महे इत्यर्थः' इति वदन्ति, तदपि न। प्रतीत्यध्याहारापत्तेः। नच 'शासिदुहिरुधि-' इत्यादिना द्विकर्मकत्वं 'माणवकं धर्मं शास्ति' इतिवदिति वाच्यम्। तत्र 'शासु अनुशिष्टौ' इत्यस्यैव ग्रहणाच्च। नच 'तदेवेदम्' इति वाच्यम्। तस्य परस्मैपदित्वात् अर्थासंगतेः चकारस्यावधारणार्थकत्वाश्रयक्लेशात् पदनियमासिद्धेश्च। यदप्युक्तम्–'पूर्वेभ्यः कविभ्यः इदं नमः इत्येकं वाक्यम्, अन्यं वा कं प्रशास्महे इत्यपरं वाक्यम्, प्रशास्महे वाचमिच्छाम इत्यर्थः' इति, तदपि मन्दम्। एकवाक्यत्वसंभवे वाक्यभेदस्यान्याय्यत्वात्कवेर्वश्यवाक्त्वेन वागिच्छाया असंभवाच्च त्रयोदशपदत्वापत्तेश्च। यदपि चोक्तम्—इदंकविभ्यः इदानींतनकविभ्यः पूर्वेभ्यो वा पूर्वकविभ्यश्च नमः प्रणामं कं शिरसा प्रशास्महे। 'कं शिरोम्बुनोः' इति 'मान्ताव्ययत्वात्तृतीयार्थलाभः' इति, तदपि न। पूर्वेभ्य इत्यत्र कविभ्य इत्यध्याहारापत्तेः कविभ्य इत्येतावन्मात्रोक्तौ उभयकविलाभे निर्देशद्वयाश्रयणे प्रयोजनाभावात्। भाविकविद्वेषे मूलाभावात्। त्रयोदशपदत्वापत्तेश्च। यच्चोक्तम्–'पूर्वेभ्यो नमः इदंकविभ्यः कं वा सुखं वा प्रशास्महे प्राचीनकविभ्यो नमः प्रशास्महे इदानींतनकविभ्यः सुखं प्रशास्महे' इति, तन्न। क्रमिकैकान्वयालाभात् पूर्वोक्तदोषाच्च। यत्तूक्तम्—पूर्वेभ्यो वा पूर्वकविभ्य इव इदंकविभ्य इदानींतनकविभ्यः नमः इत्येकं वाक्यम्, कं वा प्रशास्महे इत्यपरम्, सुखं इच्छामः इति तदर्थः' इति, तन्न। विघ्नध्वंसस्यैवापेक्षितत्वेन सुखप्रार्थनाया असांगत्यात् पूर्वदोषप्रसङ्गाच्च। केचित्तु—'पूर्वेभ्यः वैदिकेभ्यः कविभ्यः गजाननाय। 'गणानां त्वा गणपतिं हवामहे' इति श्रुतेः। 'कवी शुक्रगजाननौ' इति, तन्न। बहुवचनास्वारस्यात्। पूजायां बहुत्वस्य गुरुपित्रादिवाचकशब्देभ्य एव दर्शनात्। किंचात्र गजाननस्य प्राचेतसादिसाधारणक्रान्तदर्शित्वरूपकवित्वेन कविपदादुपस्थितिर्न शक्या। सामान्यशब्दस्य विशेषव्यवस्थापकाभावात् पूर्वेभ्यः इत्यस्य च साधारणत्वात् न तद्व्यवस्थापकम्। 'कवी शुक्रगजाननौ' इति कोशाद्गजाननत्वेन तदुपस्थितिरपि न शक्या। पूर्वशब्दवैयर्थ्यापत्तेः। न ह्यपूर्वः कश्चिद्गजाननोऽस्ति येन तद्व्यावृत्त्या तत्सार्थक्यं स्यात्। 'संयोगो विप्रयोगश्च साहचर्यं विरोधिता' इत्यारभ्य 'शब्दार्थस्यानवच्छेदे विशेषे स्मृतिहेतवः' इत्युक्तरीत्या शुक्रादिव्यवच्छेदकत्वपूर्वकं गजाननोपस्थापकप्रकरणाद्यभावाच्च। नच वक्तुरपि संयोगादिप्रमाणेष्वन्यतमत्वेन परिगणनात् भवभूतेश्च मालतीमाधवे 'वैनायक्यश्चिरं वो वदनविधुतयः पान्तु' इत्युक्त्वा विनायकभक्तत्वावगमात् अत्रापि तत्परत्वं युक्तमिति वाच्यम्। तस्य महावीरचरिते परित्यागात्। अत्र औचित्यरूपदुर्बलप्रमाणमवष्टभ्य बहुवचनश्रुतेः पूजालाक्षणिकत्वस्यान्याय्यत्वाच्च। यत्तु तेनैवोक्तम्

(नान्यन्ते ।)

**सूत्रधारः**—अलमतिविस्तरेण । अद्य खलु भगवतः कालप्रिया[1]नाथस्य यात्रायामार्यमिश्रान्विज्ञापयामि—एवमत्रभवन्तो विदांकुर्वन्तु । अस्ति खलु[2] तत्रभवान्काश्यपः श्रीकण्ठपदलाञ्छनः[3] पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जतु[4]कर्णीपुत्रः ।

---

—'अनुग्राहक–'इत्यादि, तत्तु अमात्यानुवर्तनपुरःसरराजदर्शनादिन्यायविरोधादुपेक्ष्यम् । तेनैव 'कवीन्द्राः कल्पन्ते स्वयमपि विरिञ्चिप्रभृतयः' इत्यानन्दलहर्याद्युपष्टम्भेन चतुर्मुखपरत्वमुपक्षिप्य 'केतकीकुसुम–' इत्यादिना, 'या ब्रह्माच्युतशंकरप्रभृतिभिः' इत्यादिना च दूषितम् । तत्तुच्छम् । 'भवव्रतधरा ये च ये च तान्समनुव्रताः' इत्यादिभागवतप्रामाण्येन गजाननस्य नमस्कारानर्हत्वशापदानात् । 'या ब्रह्माच्युतशंकरप्रभृतिभिः सर्वैः सुरैः सेविता' इति ब्रह्मशंकरापेक्षया प्राधान्ये विनायकापेक्षया तस्य कैमुत्यसिद्धत्वाच्चेति ग्रन्थगौरवभिया विरम्यत इत्यलम् ॥ १ ॥ नान्दीलक्षणं तु— 'यत्राष्टभिर्द्वादशभिः' इत्यादि दशरूपकादिषु स्फुटम् । नाटकलक्षणं च—'वीरश्रृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते । प्रख्यातनायकोपेतं नाटकं तदुदाहृतम् ॥' इति । यद्यपि करुणरस एवास्मिन्नाटके प्रधानमिति सर्वजनीनं सूचितम्, मरणस्य प्रसक्तिपूर्वकप्रतिषेधो नाटकप्रतिपाद्य इति सूचयता नान्दीस्थामृतपदेन करुण एवास्मिन्नाटके प्रधान इति, तथापि वीरश्रृङ्गारौ प्रायिकौ इत्युक्ते न दोष इत्याहुः । पूर्वरङ्गलक्षणं तु—'यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये । कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥' इति । प्रस्तावनालक्षणं तु—'सूत्रधारो नटीं ब्रूते मारिषं वा विदूषकम् । स्वकार्यप्रस्तुताक्षेपिचित्रोक्त्यायत्तदामुखम् ॥ प्रस्तावना वा तत्र स्यात्' इति । **नान्द्यन्त इति** । नान्द्याः पूर्वोक्ताया अन्ते समाप्तौ सूत्रधारः । प्रविश्य, आहेति शेषः । तदुक्तम्—'पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । प्रविश्य तद्वदपरः काव्यमासूत्रयेन्नटः ॥' इति । प्ररोचनां प्रस्तोतुं सामाजिकावधानायाह—**अद्य खलु भगवत इति** । भगवतो ज्ञानशक्त्यादिगुणवतः कालप्रियानाथस्य कालप्रियानामाम्बिकाया नाथः शिवस्तस्य । इयं च कथा पौराणिकी वेदितव्या । यात्रायामुत्सवे आर्याः पूज्या मिश्रा ज्ञानिनस्तथाविधान्विज्ञापयामि । एवं वक्ष्यमाणप्रकारेण अत्रभवन्तः पूज्या यूयम् । 'अत्रभवत्तत्रभवच्छब्दौ पूज्यार्थौ' इत्युक्तेः । यद्वा अत्रास्मिन्नगरे भगवन्तः । यूयमित्यर्थः । विदांकुर्वन्तु । 'विदांकुर्वन्त्वित्यन्यतरस्याम्' इति सूत्रानुशिष्टोऽयं शब्दः । यात्रायामिति काल उक्तः । अत्रेति देश उक्तः । 'निर्देशो देशकालयोः' इत्युक्तेः । **अस्ति खल्विति** । काश्यपः कश्यपगोत्रोद्भवः । ऋष्यणप्रत्ययः । 'पश्यकः कश्यपो भवति' इति सर्वज्ञतया श्रुतिप्रसिद्धकश्यपवंश्यः । श्रीकण्ठ इति पदं शब्दः लाञ्छनं यस्य स तथोक्तः । श्रीकण्ठनामक इत्यर्थः । 'द्वादशेऽहनि पिता नाम कुर्यात्' इति पैतृकं नामधेयमिदम् । पदवाक्यप्रमाणज्ञः । व्याकरणन्यायमीमांसापरिज्ञातेत्यर्थः । भवभूतिर्नाम भवभूतिरिति प्रसिद्धनामवान् । एतत्कृतः 'साम्बा पुनातु भवभूतिपवित्रमूर्तिः' इति श्लोकश्रवणसंतुष्टो राजा भवभूतिरित्येनं

---

१ "°प्रिय°" इति पा० । २ 'खलु' इति क्वचिन्न पठ्यते । ३ 'लाञ्छनो भवभूतिः' इति पा० । ४ 'जातू°' इति पा० ।

यं ब्रह्माणमियं देवी वाग्वश्यैवान्ववर्तत ।
उत्तरं रामचरितं तत्प्रणीतं प्रयोक्ष्यते ॥ २ ॥

एषोऽस्मि कविवशादायोध्यकस्तदानींतनश्च संवृत्तः । (समन्तादवलोक्य ।)

ख्यापयामासेति कथा अत्रानुसंधेया । एवमन्यत्रापि कवितानुसारेण तत्तन्नामधेयम् । यथा—रत्नखेटकः, कोटिसारः, इति । उदयरक्तं चन्द्रबिम्बं रतिपतिरत्नखेटकत्वेनोत्प्रेक्षितवानित्यैतिह्यस्य, कामिनीस्तनमण्डलं प्रति 'कुलाचलेन्द्रादपि कोटिसारः' इत्युक्तवानित्यैतिह्यस्य च तन्मूलत्वात् किंचास्मै कवये ईश्वर एव भिक्षुरूपेणागत्य भूतिं दत्तवानिति वदन्ति । एवं च भवाद्भगवतो भूतिर्यस्येति भवभूतिरित्यन्वर्थ इत्याहुः । **यमिति ।** ब्रह्माणम् । यजनादिषट्कसंनिरतमित्यर्थः । लाक्षणिकोऽयं मुख्यार्थपरत्वे प्रयोजनाभावात् । तथाविधं यं भवभूतिमियं देवता प्रसादादिना साध्यत्वेन प्रसिद्धा वाग्देवी वश्या सत्येव विधिप्रतिषेधार्हा सत्येवान्ववर्ततानुवर्तितवती । यद्वा ब्रह्माणं यमेव वश्या सत्यन्ववर्तत । न त्वन्यमित्यर्थः । पूर्वस्मिन्नर्थे वश्यैवान्वर्तत नत्ववश्यान्ववर्तत । अलमेन कालिदासादिषु स्वयमवश्यैव कालिदासप्रभृत्यनुरोधेनागताया वाग्देव्या यदनुवर्तनं तद्व्यावर्तते । अत्र 'यं ब्रह्माणमियं देवी वाग्वश्येवान्ववर्तत' इति द्वितीयान्तब्रह्मशब्देन इवशब्देन च युक्तं पाठान्तरमपि क्वचिद्दृश्यते । तत्रायमर्थः—इयं वाग्देवी यं भवभूतिं ब्रह्माणमिव स्वभर्तारं चतुर्मुखमिव वश्या सत्यन्ववर्ततानुवर्तितवती । देवस्य स्त्री देवी । दीव्यति प्रकाशयति प्रकाशते इति वा देवी । 'देवट्' इति टित्त्वात् ङीप् । यद्वा—यं देवी यादृशभवभूतिविषयकेच्छावती सती इयं वाग्देवी ब्रह्माणं वश्येवान्ववर्तत । वश्यानुवर्तनाभिनयमात्रं स्वभर्तरि, भावबन्धस्तु भवभूतावेवेति भावः । 'सावित्र्याः प्रथमं यमुज्ज्वलगुणं वव्रे स्वयम्' इतिवत्स्वयंवरं कृतवतीत्यर्थः । दिवुधातोः 'कान्तिगतिषु' इत्युक्तेः इच्छायां वृत्तिः । दीव्यति कामयत इति देवीति कृदन्तदेवीपदयोगेऽपि 'तदर्हम्' इति ज्ञापकात्, 'धयैरामोदमुत्तमम्' इति प्रयोगाच्च । कृद्योगषष्ठ्या अनित्यत्वात् षष्ठ्या अप्राप्त्या द्वितीया उत्तमपरिमलकर्मकपानकर्तरि तदा षष्ठीप्रसङ्गात् । परंत्वत्र पाठे व्यवहितान्वयो दोष इत्याहुः । 'उत्तरं रामचरितं यत्प्रणीतं प्रयोक्ष्यते' इति यच्छब्दपाठ इति मत्वा 'यं वाग्देव्यन्ववर्तत । यत्प्रणीतं प्रयोक्ष्यतेऽभिनेष्यते, स भवभूतिर्नाम कविः अस्ती'ति पूर्वेणान्वयः । यत्तदोर्नित्यसंबन्धात्स इत्यस्य लाभ इति केचित् । परे तु 'तत्प्रणीतम्' इति तच्छब्दयुक्तमेव पाठमुपष्टभ्य 'इयं वाग्देवी यं भवभूतिमन्ववर्तत स भवभूतिर्नाम कविरस्ति । तत्प्रणीतं उत्तरं रामचरितं प्रयोक्ष्यत इत्यन्वयः । अन्यथा विधेयस्य स्फुटप्रतीत्यनापत्तेश्च इति वदन्ति । इयं प्ररोचना प्रस्तुता । तदुक्तम्—'निवेदनं प्रयोज्यस्य निर्देशो देशकालयोः । कविकाव्यनटादीनां प्रशंसा तु प्ररोचना ॥' इति ॥ २ ॥ **एषोऽस्मीति ।** कविवशात्काव्यानुरोधेनायोध्यकः अयोध्यासंबन्धिक इत्यर्थः । 'धन्वयोपधाद्वुञ्' (४।२।१२१) इति सूत्रेण वुञ् तस्याकादेशश्च । तदानींतनश्च रामपट्टाभिषेककालीनश्च संवृत्तोऽस्मीति योजना । निष्पन्नोऽस्मीत्यर्थः । अयमाशयः—यद्यपि भोजराजमतरीत्या सूत्रधारनटीप्रभृतिभिः प्रकृतदेशकालावलम्बिनीं प्रस्तावनामुक्त्वा

१ 'ब्राह्मणं' इति पाठः । २ '°वश्येवानुवर्तते' इति पा° । ३ 'कार्यवशात्' इति पा° ।

भोः, यदा[1] तावदत्रभवतः पौलस्त्यकुलधूमकेतोर्महाराजरामस्यायं पट्टाभिषेकसमयो रात्रिंदिवमसंहृत[2]नान्दीकः, तत्किमिदानीं विश्रान्तचा[3]रचरणानि चत्वरस्थानानि? ।

(प्रविश्य ।)

**नटः**—भाव, प्रेषिता हि स्वगृहान्महाराजेन लङ्कासमरसुहृदो महात्मानः प्लवङ्गमराक्षसाः सभाजनोपस्थायिनश्च नानादिगन्त[4]पावना ब्रह्मर्षयो राजर्षयश्च, यत्समाराधनायैतावतो दिवसा[5]न्प्रमोद आसीत् ।

**सूत्रधारः**—आँः, अस्त्येतन्निमित्तम्! ।

सूत्रधारादीन्निष्कास्य भूमिकां प्रवेश्य प्रवर्तिष्यमाणकाव्याभिनयकथासूचकविष्कम्भो वक्तव्यः, तथापि सूत्रधारस्यैव काव्यकथाघटकदेशकालसंबन्धमङ्गीकृत्य विष्कम्भवर्ण्यकथोपन्यासः सूत्रधारत्वापरित्यागाच्च प्रस्तावनात्वाहानिरिति कवेर्मतम् । तदनुसारेणाहमायोध्यकः संवृत्तोऽस्मीति । अयोध्यासंबन्धित्वं च तस्यां कादाचित्कावस्थानरूपम् । तेन वैदेशिकोऽस्मीति उपरितनग्रन्थेन न विरोधः । **यदा तावदिति** । अत्रभवतः पूज्यस्य पौलस्त्यकुलस्य रावणवंशस्य धूमकेतोरग्निवद्भस्मीकर्तुरुत्पातग्रहविशेषस्य वा महाराजश्चासौ रामश्च इति विग्रहः तस्य । रात्रिंदिवमहर्निशम् । 'अचतुर–'(५।४।७७) इति सूत्रे निपातितोऽयं शब्दः । असंहृतनान्दीकोऽविच्छिन्नमङ्गलः । 'शेषाद्विभाषा' (५।४।१५४) इति कप् ह्रस्वप्रतिषेधः । अयं पट्टाभिषेकसमयः पट्टाभिषेकमुहूर्तः यदा यस्मिन्काले । यद्वा समय आचारः पट्टाभिषेकरूप आचारो यदा यस्मिन्काले । इदानीमस्मिन्नकाले पट्टाभिषेक समये चत्वरस्थानान्यङ्गणभागाः विश्रान्तमवसितं चाराणामधिकारिपुरुषाणां चरणं संचरणं येषु तानि विश्रान्ताश्चाराणामधिकारिपुरुषाणां चरणा अङ्घ्रयो येष्विति वा । चारा निवृत्तव्यापाराः सन्तः चत्वरेषूपविश्य विश्राम्यन्तीति भावः । तत्किमिदानीं पट्टाभिषेककाले चत्वरस्थानानि विश्रान्तचारचारणानीति, यत् तत् किमिति योजना । यस्मिन्दिवसे कलशतीर्थसेचनरूपपट्टाभिषेकक्रियाधिकरणमुहूर्तस्तद्दिवसात्पूर्वोक्तदिनानां तदुत्सवकालत्वेन यथायमभिषेकसमय इत्युक्तिरविरुद्धा । सूक्ष्मकालं प्रति स्थूलकालस्याधारत्वात् । प्रासादखट्वापर्यङ्कन्यायोऽत्रानुसंधेयः ॥ **भाव, प्रेषिता इति** । महात्मानो महाधैर्याः । सभाजनं सपर्यामुपतिष्ठन्ते प्राप्नुवन्तीति सभाजनोपस्थायिनः । 'सुप्यजातौ–'(३।२।७८) इति णिनिः । इदं च मध्यमणिन्यायेन पूर्वोत्तराभ्यामन्वेति ब्रह्मर्षयो- गौतमविश्वामित्रादयः, राजर्षयस्तु जनकप्रभृतयः देवर्षीणां ऊर्ध्वदिग्गमनान्नानादिगन्तेत्युक्तिः । यत्समाराधनाय येषां प्लवङ्गमादीनां समाराधनाय पूजनायैतावतो दिवसानेतावत्सु दिवसेषु । अत्यन्तसंयोगे द्वितीया । प्रमोदः । चारगतागतहेतुभूतप्रहर्ष इत्यर्थः । यत्समाराधनाय प्रमोद आसीत्, ते प्रेषिता इत्यन्वयः । 'तत्समाराधनाय' इति तत्पदयुक्तपाठे तु न विश्रान्तचारचरणत्वे हेतुरुक्तो भवतीत्यत्राह—तत्समाराधनायेति । एवं चारचरणहेतुर्गत इति भावः । आ, अस्त्येतन्निमित्तम् । आ इति स्मरणवाचकम् ।

१ 'यदि' इति पा० । २ "°हृतानन्दना°" इति पा० । ३ 'चारणानि' इति पा० । ४ "°न्तागता ब्र°" इति पा० । ५ "°सानुत्सव' इति पा० । ६ क्वचित् नास्तीदं वाक्यम् ।

**नटः**—अन्यच्च ।

वसिष्ठाधिष्ठिता देव्यो गता रामस्य मातरः[1] ।
अरुन्धतीं पुरस्कृत्य यज्ञे जामातुराश्रमम् ॥ ३ ॥

**सूत्रधारः**—वैदेशिकोऽस्मीति पृच्छामि । कः पुनर्जामाता[2] ? ।

**नटः**—

कन्यां दशरथो राजा शान्तां नाम व्यजीजनत् ।
अपत्यकृतिकां राज्ञे रोमपादाय तां ददौ ॥ ४ ॥

विभाण्डकसुतस्तामृष्यश्टृङ्ग उपयेमे । तेन च सांप्रतं द्वादशवार्षिकं सत्रमारब्धम् । तदनुरोधात्कठोरगर्भामपि जानकीं विमुच्य गुरुजनस्तत्र यातः[3] ।

अत एव 'निपात एकाजनाङ्' (१।१।१४) इति प्रगृह्यत्वात् आ अस्तीति संध्यभावः । 'वाक्यस्मरणयोरङित्' इत्याद्युक्तेः । एतन्निमित्तमस्ति । मया विस्मृतमिति भावः ॥ **वसिष्ठाधिष्ठिता इति** । अरुन्धतीं पुरस्कृत्य वसिष्ठाधिष्ठिता इत्यन्वयः । गुरुपत्नीत्वप्रयुक्तप्राधान्यादरुन्धतीं मुख्यां कृत्वा वसिष्ठेन व्यापारिता इत्यर्थः । वसिष्ठः कर्तव्यं अरुन्धतीमुखमवलोकमानोऽनुशास्ति । ततो देव्योऽरुन्धत्या सह कर्तव्यमनुतिष्ठन्तीति भावः । जामातुरित्येतन्मध्यमणिन्यायेन यज्ञाश्रमाभ्यामन्वेति यज्ञे यज्ञनिमित्तम् । 'निमित्तात्कर्मयोगे' (२।३।३६वा.) इति सप्तमी । सतीत्यध्याहारेण यज्ञे सति आश्रमे गता इति वार्थः ॥ ३ ॥ वैदेशिको विदेशो देशान्तरं तत्रभवो वैदेशिकः । अध्यात्मादित्वाट्ठञ् । विदेशस्थस्यापि कदाचिदयोध्यास्थितिसंभवादित्याहुः ॥ **कन्यामिति** । व्यजीजनत् अजनयत् । 'जनी प्रादुर्भावे' इति धातोर्णिच् । तां शान्तां रोमपादाय रोमपादनाम्नेऽपत्यस्य कृतिर्व्यापारो यस्यास्तथाविधाम् । 'शेषाद्विभाषा' (५।४।१५४) इति कप् । कन्यां ददावित्युक्ते कलत्रार्थमिति प्रतितेस्तद्वारणायापत्यकृतिकामिति । ददौ दत्तवान् ॥ ४ ॥ तेन ऋष्यशृङ्गेण । द्वादशवर्षाणि भविष्यतीति द्वादशवार्षिकम् । 'तमधीष्टो भृतो भूतो भावी' इत्यधिकृत्य विहितष्ठञ् द्विगुः । 'वर्षाल्लुक् च' (५।१।८८) इति पाक्षिको लुगभावः । अनुशतिकादित्वादुभयत्र वृद्धिः । नतूत्तरपदवृद्धिमात्रम् । 'अभविष्यति' इति प्रतिषेधात् । न च द्वादशवर्षाणि भूतमित्यर्थोऽस्त्विति वाच्यम्, आरब्धमित्युक्तेरसाङ्गत्यापत्तेः । तदनुरोधात्कठोरगर्भामपीत्यादिना कठोरगर्भेति नानीता सीतेत्युक्ततया सीतायाः गर्भिणीदशायामेतत्सत्रमारब्धमिति स्पष्टमवगम्यते । एवं द्वितीयाङ्कविष्कम्भे—'समनन्तरं च गर्भैकादशे वर्षे क्षात्रेण कल्पेनोपनीय त्रयीमध्यापितौ' इत्युक्त्वा संप्रति परिसमाप्तं द्वादशवार्षिकं सत्रम्' इति वक्ष्यमाणतया अत्रत्यद्वादशवार्षिकशब्दस्य द्वादशवर्षाणि भूतमित्यर्थाभ्युपगमेन तद्विरोधापत्तेरिति ध्येयम् । तदनुरोधात्तदनुसरणाद्धेतोः कठोरगर्भां पूर्णगर्भाम् । कठोरशब्दः पूर्णवाची । तदुक्तमुणादिषु वैयाकरणैः—'अयं पूर्णतायामपि' इति । **यात इति** । 'अनाहूतोऽध्वरं गच्छेत्' इति

१ 'राघवमातरः' इति पा० । २ 'पुनरसौ' इति पा० । ३ 'गतः' इति पा० ।

**सूत्रधारः**—तत्किमनेन ? । एहि । राजद्वारमेव स्वजातिसमयेनोपतिष्ठावः ।

**नटः**—तेन हि निरूपयतु राज्ञः सुपरिशुद्धामुपस्थानस्तोत्रपद्धतिं भावः ।

**सूत्रधारः**—मारिष,

सर्वथा व्यवहर्तव्यं[1] कुतो ह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ ५ ॥

**नटः**—अतिदुर्जन इति वक्तव्यम् ।

देव्या[2] अपि हि वैदेह्याः सापवादो यतो जनः ।
रक्षोगृह[3]स्थितिर्मूलमग्निशुद्धौ त्वनिश्चयः ॥ ६ ॥

विधेः, किं पुनर्न्यायादिति भावः ॥ **तत्किमिति** । स्वजातिसमयेन स्वजातिमर्यादया । उपतिष्ठावः तोषयावः । रामस्य 'आत्मानं मानुषं मन्ये रामं दशरथात्मजम्' इति देवत्वाभावात् 'उपाद्देवपूजा–' ( १।३।२५ सू. वा. ) इत्यादिना नात्मनेपदम् । तथा च स्वजात्यनुगुणरूपं यत्स्तोत्रं तत् कुर्व इति बोधः ॥ **तेनेति** । स्तोतव्यमिति यत्तेनेत्यर्थः । सुपरिशुद्धां सुष्ठु दोषरहिताम् । स्तुवन्त्यनेनेति स्तोत्रं ग्रन्थः तस्य पद्धतिरानुपूर्वी । उपस्थानाय गुणिनिष्ठगुणाभिधानाय स्तोत्रपद्धतिमित्यर्थः । समासस्तु षष्ठ्यन्तस्येति बोद्धम् । निरूपयतु उत्पादयतु । वदत्वित्यर्थः ॥ ननु यदुक्तं स्तुतिं निरूपयत्विति तदवगच्छामि सुपरिशुद्धामिति नाभ्युपगच्छामि, दोषरहितत्वरूपपरिशुद्धत्वस्य प्रयोजनाभावात् । स्तुतिवचनं तु कर्तव्यमेव, स्वजातिनियतव्यापारत्वादित्याह—**सर्वथेति** । सर्वेण प्रकारेण सर्वथा । व्यवहर्तव्यं व्यवहारः कर्तव्यः । भावे तव्यप्रत्ययः । व्यवहारशब्दः स्तुतिकरणरूपव्यापारपरः । अवचनीयता वचनीयं दोषस्तद्रहितता । सुपरिशुद्धतेत्यर्थः । कुतः किमर्थम् । यद्वा कुतः कस्मै । 'सार्वविभक्तिकस्तसिः' इति चतुर्थ्यर्थे तसिः । अयमाशयः—दोषवत्तया वा दोषरहिततया वा गुणवत्तया वा स्तुतिकरणरूपव्यापारः कर्तव्यः । तस्य स्वजातीयधर्मत्वात्त्वदुक्तसुपरिशुद्धतया तु किम् ? । तस्याः फलाभावादिति । ननु जनाभिनन्दनमेव तत्फलमस्तु, कुतः फलभाव इत्यत्राह–यथा स्त्रीणामित्यादिना । पूर्वपादस्थहिशब्दस्यात्र संबन्धः । हि यस्माज्जनः स्त्रीणां साधुत्वे दुर्जनः, तस्मादवचनीयता किमर्थेति पूर्वेण संबन्धः । जनः स्त्रीणां साधुत्वे यथा पातिव्रत्यविषय इव वाचां साधुत्वे माधुर्यौज्ज्वल्यादिविषये दुर्जनो दोषदर्शी । दोषदर्शित्वमेव हि दौर्जन्यमिति भावः । यथा स्त्रीणां साधुत्वे जनो दुर्जनः, तथा वाचां साधुत्वेऽपि जनो दुर्जनः, हि यस्मात्तस्मादवचनीयता किमर्थेत्यर्थः ॥ ५ ॥ प्रकृतकथासंगतये यथा स्त्रीणामिति दृष्टान्त उक्तः । तदुपजीव्य प्रकृतमवलम्बते-**नटः-अतिदुर्जन इति वक्तव्यमिति** । तत्र हेतुमाह–**देव्या इति** । हि यत इत्यनयोर्यथाक्रमं पूर्वोत्तरार्धयोरन्वयः । हि यस्माद्देव्या

१ 'व्यवहर्तव्ये' इति पाठः । २ 'देव्यामपि हि वैदेह्यां' इति पा० । ३ '°गृहे' इति पा० ।

**सूत्रधारः**—यदि पुनरियं किंवदन्ती महाराजं प्रति स्यन्देत, ततः कष्टं स्यात्! [1]।

**नटः**—सर्वथा ऋषयो देवाश्च [2] श्रेयो विधास्यन्ति। (परिक्रम्य।) भो भोः, क्वेदानीं महाराजः? । (आकर्ण्य।) एवं जनाः कथयन्ति—

स्नेहात्सभाजयितुमेत्य दिनान्यमूनि
नीत्वोत्सवेन जनकोऽद्य गतो विदेहान्।
देव्यास्ततो विमनसः परिसान्त्वनाय
धर्मासनाद्विशति वासगृहं नरेन्द्रः॥ ७॥

(इति निष्क्रान्तौ।)

**इति प्रस्तावना।**

---

दीप्तिमत्या अपि। स्वभावतो दोषप्रतिभटाया अपीत्यर्थः। वैदेह्या विदेहराजपुत्र्याः। संबन्धसामान्ये षष्ठी। जनः सापवादः। अपवादो दोषकथनं तेन सहित इत्यर्थः। तथा च वैदेहीसंबन्ध्यपवादसहित इत्यर्थः। नित्यसापेक्षत्वात्समासः। तदुक्तम्—'संबन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते' इति। यतश्च रक्षोगृहस्थितिः राक्षसगृहावस्थानमात्रम्। न त्वन्यदिति भावः। मूलं दोषकथनहेतुः। अग्निशुद्धौ अनिश्चयस्तु निश्चयाभावश्च। तुशब्दः चार्थकः। अत्र देव्या इति दोषाभाव उक्तः। रक्षोगृहस्थितिरित्यनेन असाधारणहेत्वभाव उक्तः। अग्निशुद्धावित्यनेन बाधकप्रमाणमुक्तम्। तथा च एतत्सर्वमपि नावलोकितमिति भावः। विषयप्रभावमविगणय्य असतोऽपि दोषस्य कथनं सुतरां दुर्जनकार्यम्। तत्राप्यसाधारणहेतुमप्यदृष्ट्वा विषयप्रभावमप्यविगणय्य असतोऽपि दोषस्य कथनं ततोऽप्यतिदुर्जनकार्यम्। तत्रापि बाधकप्रमाणमप्यविश्वस्यासाधारणकारणमप्यदृष्ट्वा विषयप्रभावमप्यविगणय्यासतोऽपि दोषस्य कथनं ततोऽप्यतिदुर्जनकार्यमिति। अत्र हि यस्मात्सापवादः। यतश्च रक्षोगृहस्थितिर्मूलम्। अग्निशुद्धावनिश्चयश्च जनस्य। तस्मात् जनोऽतिदुर्जन इति वक्तव्यमित्येवं पूर्वेणान्वयः॥ ६॥ **यदि पुनरिति**। किंवदन्ती लोकवादः स्यन्देत प्रस्रवेत्। श्रवणविषयीभवेदिति यावत्। अनेन प्रथमाङ्कार्थः सूच्यते। 'सर्वथा ऋषयः' इत्याद्यनेन शेषाङ्कार्थः सूचितः। एष ऋषिकर्तृकश्रेयोविधानरूपबीजन्यासादुपक्षेपो नाम संध्यङ्गमुक्तम्। यथा—'बीजन्यास उपक्षेपः' इति॥ **आकर्ण्येति**। इदमाकाशभाषितमुच्यते। तदुक्तम्—'अप्रविष्टैः सहालापो भवेदाकाशभाषितम्' इति। **स्नेहादिति**। सभाजयितुं पूजयितुम्। उत्सवेन हर्षजनकव्यापारेण। विमनसो दुःखितहृदयायाः परिसान्त्वनाय तद्दुःखापनयनक्षममधुरवचनप्रयोगाय। 'तुमर्थाच्च' इति चतुर्थी। धर्मासनात् क्षत्रियधर्मभूतराज्यपरिपालनार्थसिंहासनादित्यर्थः। वासगृहं स्वावासगृहम्। विशति प्रवि-

---

१ 'स्यात् ततोऽतिकष्टं' इति पा०। २ 'देवताश्च' इति पा०।

(ततः प्रविशत्यासनोपविष्टो रामः सीता च ।)

**रामः**—देवि वैदेहि, विश्वसिहि[1] । ते हि गुरवो न शक्नुवन्ति विहातुमस्मान्[2] ।

किंत्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
संकटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ ८ ॥

**सीता**—जाणामि* अज्जउत्त, जाणामि । किंदु संदावआरिणो बंधुजणविप्पओआ होंति ।

**रामः**—एवमेतत् । एते हि हृदयमर्मच्छिदः संसारभागाः[3] । येभ्यो बीभत्समानाः संत्यज्य सर्वान्कामानरण्ये विश्राम्यन्ति मनीषिणः ।

(प्रविश्य ।)

**कञ्चुकी**—रामभद्र—(इत्यर्धोक्ते साशङ्कम् ।) महाराज—

**रामः**—(सस्मितम् ।) आर्य, ननु रामभद्र इत्येव मां प्रत्युपचारः शोभते तातपरिजनस्य, तत् यथाभ्यस्तमभिधीयताम् ।

---

* जानामि आर्यपुत्र, जानामि । किंतु संतापकारिणो बन्धुजनविप्रयोगा भवन्ति ।

---

शति ॥७॥ एवं प्रस्तावना प्रस्तुता । अथाङ्कः प्रस्तूयते—**ततः प्रविशतीत्यादिना** । अङ्कलक्षणं तु—'प्रत्यक्षनेतृचरितो बिन्दुव्यक्तिपुरस्कृतः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः ॥' इति । विश्वसिहि संतोषं प्राप्नुहि । 'समाश्वसिहि' इति पाठान्तरम् । विहातुं त्यक्तुम् । **किंत्विति** । किंतु अनुष्ठानस्य नित्यनैमित्तिकादिकर्मकलापनिर्वर्तनस्य नित्यत्वं नियतता । अनुष्ठानाभावविरहरूपनियम इत्यर्थः । स्वातन्त्र्यं स्वैरावस्थानमपकर्षति न सहते । अपकर्षतीत्युक्त्या अतिक्रामदपि स्वैरावस्थानं निरुन्ध इति लाभेन, कदाचिदप्यङ्गीकृतमपि स्वैरचरितं तदाननुष्ठितकर्मानुष्ठापनेन, तदनुष्ठानाभावप्रायश्चित्तानुष्ठापनेन च लभ्यते जनैरिति तदाशयः । तदाह—**संकटा हीति** । हि यस्मात् । आहिताग्नीनां गृहस्थता गृहस्थाश्रमः प्रत्यवायैर्विहिताऽनाचरणजन्यपातकैः संकटा निबिडा दुःखरूपा वा । जाग्रत्प्रत्यवायेत्यर्थः ॥ ८ ॥ **एवमिति** । येभ्य इति संसारभागेभ्यः । संसारेऽवश्यानुभाव्यभाग इत्यर्थः । संसारो हि शरीरसंबन्धानुबन्धिसुखदुःखसमुदायः । तथा च गुरुबन्धुवियोगादीनां तदेकदेशत्वं संगतम् । बीभत्समाना जुगुप्समानाः । एतद्दोषानुबन्धजनितचित्तवृत्तिनिवृत्तियुक्ता इत्यर्थः । बीभत्साया जुगुप्सावस्थायिकत्वादित्थं व्याख्यातम् । अत एव बीभत्समाना इत्यस्य 'जुगुप्साविराम—' (२।३।२८ सू. वा.) इत्यादिना पञ्चमी । 'बन्ध बन्धने' इत्यस्मात् स्वार्थे सनि रूपमिदम् । 'बधेश्चित्तविकारे'

---

१ 'समाश्वसिहि' इति पा० । २ 'अस्मान् वियोक्तुं' इति पा० । ३ '°भावाः' इति पा० ।

कञ्चुकी—देव, ऋष्यशृङ्गाश्रमादष्टावक्रः संप्राप्तः ।

सीता—*अज्ज, तदो किं विलंबीअदि ? ।

रामः—त्वरितं प्रवेशय ।

(कञ्चुकी निष्क्रान्तः ।)

(प्रविश्य ।)

अष्टावक्रः—स्वस्ति वाम् ! ।

रामः—भगवन्, अभिवादये । इत आस्यताम् ।

सीता—†भअवं, णमो दे । अवि कुसलं सजामातुअस्स गुरुअणस्स अज्जाए संताए अ ? ।

रामः—निर्विघ्नः सोमपीथी भावुको मे भगवानृष्यशृङ्गः, आर्या च शान्ता ? ।

सीता—अम्हे‡ वि सुमरेदि ? ।

अष्टावक्रः—(उपविश्य ।) अथ किम् ? । देवि, कुलगुरुर्भगवान्वसिष्ठस्त्वामिदमाह—

विश्वंभरा भगवती भवतीमसूत
राजा प्रजापतिसमो जनकः पिता ते ।

---

* आर्य, ततः किं विलम्ब्यते ? ।

† भगवन्, नमस्ते । अपि कुशलं सजामातृकस्य गुरुजनस्यार्यायाः शान्तायाश्च ? ।

‡ अस्मानपि स्मरति ? ।

---

इति वार्तिकादस्य चित्तविकारे वृत्तिः । काम्यन्त इति कामाः । कर्मणि घञ् । गृहक्षेत्रपुत्रादयस्तानित्यर्थः ॥ उपचारो व्यवहारः । यथाभ्यस्तमभ्यस्तमनतिक्रम्य । यथार्थत्वात्समासः । अभिधीयताम् ॥ अष्टावक्रस्तदाख्यः । अष्टौ वक्राण्यस्येति विग्रहः । योगरूढशब्दः । 'अष्टनः संज्ञायाम्' इति दीर्घः । हास्यरसानुप्रवेशार्थमष्टावक्रप्रवेशः । **अवि कुसलं सजामातुअस्सेति** । सजामातुअस्स सजामातृकस्य । 'प्रायो लुक्कगचजतदपयवाम्' इति सूत्रेण ककारलोपः । तस्मिन्नवशिष्टाकारस्येषत्स्पृष्टयकारश्रुतिश्च प्राकृतव्याकरणसिद्धा ॥ **निर्विघ्न इति** । सोमपीथी सोमपा इत्यर्थः । भावुकः पूज्यः । शान्तापतित्वादिति भावः ॥ **विश्वंभरेति** । नन्दिनि गुणपूर्णे । 'टुनदि समृद्धौ' इत्यस्मात् भावे घञि 'अत इनिठनौ' इति इनिप्रत्ययः । एकाक्षरा-

---

१ 'समग्गस्स' इत्यपि पा० । २ 'आवुत्तो' ( =भगिनीभर्ता ) इति पा० ।

तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां
येषां कुलेषु सविता च गुरुर्वयं च ॥ ९ ॥

तत्किमन्यदाशास्महे ? । केवलं वीरप्रसवा भूयाः ! ।

**रामः**—अनुगृहीताः स्मः ।

---

त्कृतोऽजाताविति निषेधस्तु प्रायिकः । ग्रह्यादिणिनिर्वा । नान्तत्वात् ङीप् । नन्दिनि पुत्रि । संबोधनम् । इदं च 'अस्माकं तु जनकसुता दुहितैव' इति वक्ष्यमाणरीत्या दशरथमतानुसारेण भगवती षाड्गुण्यपरिपूर्णा विश्वंभरा भूमिः भूरित्याद्यनुक्त्वा विश्वंभरोक्तिः क्षान्तिप्रधानतासूचनाय । भवतीं पूज्यां त्वामसूत सूतवती । 'षूङ् प्राणिप्रसवे' लङ् । शपो लुक् । विश्वंभराशब्दस्तु 'संज्ञायां भृतृ–' इत्यादिना खच्प्रत्ययमुमागमाभ्यां निष्पन्नः । प्रजापतिना ब्रह्मणा समः । स्वाध्यायादिना ब्रह्मतुल्य इत्यर्थः । 'मान्धातारमपारसंसदि महद्भावे यशोराशिषु' इत्युक्तरीत्या ब्रह्मवत् माहात्म्यशालीति वा । राजा । राजते दीप्यते इति । 'कनिन् युवृषितक्षि–' इत्यादिना कनिन्प्रत्ययः । ब्रह्मज्ञानपरिपूर्णतया नैष्ठिकवन्निरतिशयदीप्तियुक्त इत्यर्थः । इदं चोक्तं मीमांसायाम् 'क्षत्रियत्वगतेश्च' इति सूत्रविषयवाक्यप्रकरणे ज्ञानश्रुतीनां क्षत्रियवृत्तान्ते स्पष्टम् । यद्वा ज्ञानभक्तिवैराग्यैरस्मदादीनपि रञ्जयतीति राजा धातूनामनेकार्थत्वादिति । जनकः पूर्वोक्तप्रकारेण श्रुतिषु प्रसिद्धः । 'जनको ह वैदेहः', 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यादिषु प्रसिद्ध इत्यर्थः । ते पिता । येषां राज्ञां कुलेष्विति बहुत्वं पूजायाम् । उद्भूतावयवविवक्षया, कुलं ह्युत्पादकप्रबन्धः । सर्वं जगत्सुवति कर्मानुष्ठाने प्रेरयतीति वा सविता सूर्यः । गुरुः पिता । वयमहम् । 'अस्मदो द्वयोश्च' इति एकत्वे बहुवचनम् । 'सविशेषणस्य प्रतिषेधः' इति तु न विधेयविशेषणविषये । ततो नु त्वं प्रेयान्वयमपि हताशाः प्रियतमाः' इत्यादिप्रयोगात् । 'यद्वा वसिष्ठाङ्गिरसौ ऋषी प्राचेतसस्तथा' इति वक्ष्यमाणरीत्या वाल्मीकेः, जृम्भकास्त्रसंप्रदानेन विश्वामित्रस्य, वामदेवादेश्च ग्रहणात् वयमिति बहुवचनम् । गुरुरित्यनुषक्तस्य वचनविपरिणामात् गुरवो हितोपदेष्टारः । गृणातीति गुरुः । 'कृग्रोरुच्च' इत्यौणादिकसूत्रेण निष्पन्नोऽयं शब्दः । 'गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निवर्तकः' इति निरुक्त्या अज्ञाननिवर्तक इत्यर्थः । गुरवः पितर इत्येव वार्थः । 'स हि विद्यातस्तं जनयति' इति स्मृतेः, 'पुत्रका इति होवाच' इत्यादिपुराणाच्च । तेषां पार्थिवानाम् । 'सर्वा पूर्वमियं येषामासीत्कृत्स्ना वसुंधरा' इत्युक्तमुख्यपृथिवीपतित्वधर्माणां वधूरसि स्नुषासि ॥ ९ ॥ **तदिति** । तस्मात् अन्यत् किं वक्ष्यमाणादितरत्किमाशास्महे । 'आङः शासु इच्छायाम्' इति धातोर्लट् । अयं भावः–तव गुणातिशयो नाशास्यः, तस्य 'विश्वंभरा भगवती' इत्युक्तमातृसंबन्धवशादेव तत्सिद्धेः । नापि ज्ञानभक्तिवैराग्यादिकम्, तस्य ब्रह्मवित्तमजनकसंबन्धादेव तल्लाभात् । न वा हितग्राहित्वमैश्वर्यं भर्तृसंबन्धप्रयुक्तनिकर्षाभावश्च प्रार्थ्यः । तेषां सद्गुरुसंबन्धशालिमहाराजमहाकुलप्रसूतराजकुलस्नुषात्वादेव सिद्धत्वात् । अत एतेषां नाशास्यत्वम्, किंतु वीरप्रसवत्वस्येति । एष ऋषिश्रेयोविधानभूतवसिष्ठानुग्रहरूपबीजस्य बहूकरणात्परिकरः । तदुक्तम्—'बीजस्य बहूकरणं परिकारः' इति ॥ **अनुगृहीता**

लौकिकानां हि साधूनामर्थं वागनुवर्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुवर्तते[1] ॥ १० ॥

**अष्टावक्रः**—इदं च भगवत्याऽरुन्धत्या देवीभिः शान्तया च भूयो भूयः संदिष्टम् । यः कश्चिद्गर्भदौर्हृदोदयो[2] भवत्यस्याः सोऽवश्यमचिरान्मानयितव्य[3] इति ।

**रामः**—क्रियते यदेषा[4] कथयति ।

**अष्टावक्रः**—ननान्दुः पत्या[5] च देव्याः संदिष्टम्—'वत्से, कठोरगर्भेति नानीतासि । वत्सोऽपि रामभद्रस्त्वद्विनोदार्थमेव स्थापितः । तत्पुत्रपूर्णोत्सङ्गामायुष्मतीं द्रक्ष्यामः[6]' इति ।

**रामः**—(सहर्षलज्जास्मितम् ।) तथास्तु । भगवता वसिष्ठेन न किंचिदादिष्टोऽस्मि[7] ? ।

**अष्टावक्रः**—श्रूयताम् ।

---

**इति** । एतन्मनुष्यानुग्रहरूपबीजाङ्गीकरणरूपं समाधानं नाम संध्यङ्गमुक्तम् । तदुक्तम्—'बीजाङ्गीकरणं समाधानं' इति । **लौकिकानामिति** । लौकिकानामित्यतो व्यतिरेकनिर्देशाल्लोकान्यस्य वेदस्यैव झटित्युपस्थितेः ऋषीणामित्युक्तम् । ऋषीणां पुनः । तपस्विनामित्यर्थः । वाचमर्थोऽनुवर्तते वागधीनोऽर्थो भवति । तपस्विनामुक्तिर्हि तपःप्रभावेनानासन्नमप्यर्थमुत्पादयतीति भावः । यद्वा 'ऋष गतौ' इत्यस्य बुद्ध्यर्थत्वात्कालत्रयवर्तिवस्तुसाक्षात्कर्तृत्वं ऋषिपदप्रवृत्तिनिमित्तम् । तथा च भाविनमर्थं दृष्ट्वा ते वदन्ति । ततः स्वकाले प्राप्ते सोऽर्थस्तामनुसरतीति भावः । हि यस्मादेवं तस्मादनुगृहीता वयमित्यन्वयः । एतत् ऋषिश्रेयोवितरणरूपबीजगुणवर्णनात् विलोभनं नाम संध्यङ्गमुक्तम् । यदुक्तम्—'बीजगुणवर्णनं विलोभनम्' इति ॥१०॥ **इदं चेत्यादि** । गर्भस्य दौर्हृदं लक्षणम् 'सकीचकैर्मारुतपूर्णरन्ध्रैः' इतिवत् विशेष्यमात्रपरम् । अन्यथा दौर्हृदशब्दस्यैव गर्भचिह्नवाचित्वात् । तच्च विशिष्टवस्तुविषयाभिलाषादिरूपम् । तस्योदय आविर्भावः । मानयितव्यः संभावयितव्यः । तथा संपादनेन सफलीकार्य इति भावः ॥ **क्रियत इति** । एषा कथयति यदि क्रियत इत्यन्वयः ॥ **ननान्दुरिति** । ननान्दुः शान्ताया इत्यर्थः । देव्या इत्यस्य पूर्वोत्तराभ्यां संबन्धः । तथा च देवीसंबन्धिननान्दृपतिना देव्याः संदिष्टम् । देवीं प्रति संदिष्टमित्यर्थः । पुत्रपूर्ण उत्सङ्गोऽङ्को यस्या इति बहुव्रीहिः । यद्वात्र पूर्णपदेन यमावित्यपि सूच्यते, अन्यथा पुत्रवदुत्सङ्गामिति वक्तुं शक्यत्वात् । द्रक्ष्याम इति । एतत् बीजानुगुणप्रयोजनविभावनरूपा युक्तिर्नाम संध्यङ्गमुक्तं भवति । तदुक्तम्—'बीजानुगुणप्रयोजनविभावना युक्तिः'

---

१ 'ऽनुधावति' इति पा० । २ 'दोहदो' इति पा० । ३ 'सम्पादयितव्य' इति पा० । ४ 'यद्यदेषा' इति पा० । ५ 'ऋष्यशृङ्गेण' इत्यधिकम् । ६ 'द्रक्ष्यामि' इति पा० । ७ 'किमादिष्टः' इति पा० ।

जामातृयज्ञेन वयं निरुद्धास्त्वं बाल एवासि नवं च राज्यम् ।
युक्तः प्रजानामनुरञ्जने स्यास्तस्माद्यशो यत्परमं धनं वः ॥ ११ ॥

रामः—यथा समादिशति भगवान्मैत्रावरुणिः ।

स्नेहं दयां च सौख्यं च यदि वा जानकीमपि ।
आराधनाय [2]लोकस्य मुञ्चतो नास्ति मे व्यथा ॥ १२ ॥

---

इति ॥ **जामात्रिति** । ऋष्यशृङ्गेति वक्तव्ये जामात्रित्युक्तं पूज्यतास्फोरणाय । एवं च तदिङ्गितं ज्ञात्वैवास्माभिस्तत्रासितव्यम् । किं पुनस्तत्कृतबहुनिर्बन्धे सतीत्यत आह—निरुद्धा इति । अनेन सर्वप्रकारेणापि नगरं प्रत्यागमने त्वरातिशयो वसिष्ठस्येति व्यज्यते । ननु कुत ईदृशत्वरातिशय इत्यत आह—त्वं बाल एवासीति । ननु राज्यतन्त्रविचारोपमर्दाभिज्ञ इत्यर्थः । किंच दशरथजामातरं ऋष्यशृङ्गं जामातेति निर्दिशन्वसिष्ठः स्वस्य दशरथस्थानीयतामभिप्रैति । तच्च रामबुद्ध्या स्वबुद्ध्या च । एवं चात्रत्यबालशब्दः पुत्रत्वाभिप्रायमूलकः । ततश्च ननु यद्यत्राचार्यकं प्रस्तुतं स्यात् इति तदागमने त्वरातिशय इति । न केवलमहमाचार्यः, किंतु त्वद्बुद्ध्या दशरथस्थानीयश्च । तथाच त्वदीयराज्यतन्त्रविषयकास्थानानर्थशङ्का मामसंनिकृष्टं बाधत इत्याह—त्वं बाल एवासि । नत्वन्याद्दशरघुकुलराजवत् शिष्य इत्यर्थः । तथाच । तव शिष्यमात्रत्वे पौरोहित्यादिकं वामदेवादयो निर्वेक्ष्यन्तीति तदर्थं नास्माकं त्वरा । किंतु तत्पुत्रत्वात् त्वां युवराजीकृत्य महाराजस्थानीयेन मया राज्यतन्त्रो विचारयितव्यः । अन्यथा न मामतिशङ्का मुञ्चतीति भावः । नन्वस्त्वेवम्, तथापि युद्धादिषु लब्धवर्णस्य यौवराज्यस्य पालने सहापेक्षा नास्तीत्यत्राह—राज्यमिति । नवं च नवमेव । ननु युद्धादिवत् परिचितपूर्वमित्यर्थः । ननु तर्हि किं कर्तव्यमित्यत्राह—युक्त इति । युक्तः संनद्धः । 'योगः संनहन—' इति कोशात् स्वस्मादात्मन आत्मीयाद्वा । परमं सर्वोत्कृष्टं प्रसिद्धधनस्य क्षयित्वमिति, तद्व्यावृत्तिः परमशब्देन विवक्षिता । धनं लब्धांशपरिपालनालब्धांशार्जनाभ्यां धनतुल्यमित्यर्थः ॥११॥ **यथेति** । मैत्रावरुणिः मित्रावरुणयोरपत्यमित्यर्थे बाह्वादित्वादिञ्प्रत्ययः । 'देवताद्वन्द्वे च' इत्यानङ् । इयं च कथा पौराणिकी वेदितव्या । समादिशत्याज्ञापयति । तथा करोमीति शेषः । **स्नेहमिति** । स्नेहो हि सुखरूपः सुखान्तरहेतुश्च । किंच 'शरीरं वसु विज्ञानं मित्रार्थे संपरित्यजेत्' इत्युक्तरीत्या सर्वापेक्षया प्रशस्तश्च । अपि च 'अहेतुः पक्षपातो यस्तस्य नास्ति' इत्युक्तरीत्या दुर्निवर्त्यश्च । तथा च तत्परित्यागोऽपि मम न दुःखायेति भावः । स्नेहस्य व्यवस्थितविषयत्व एव गुणत्वम्, अन्यथा तु दोषत्वमस्तीति निष्कर्षः । दया तु सर्वविषयापि गुणत्वं न मुञ्चति । यथा 'सर्वभूतेषु सर्वत्र संतुष्ट्या येनकेनचित् । सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दनः ॥' इत्युक्त्या धर्मरूपतया च । किंच परदुःखाधीनसत्तया तन्निवृत्तिं विना दुर्निवर्त्या । तामपि मुञ्चतो मम न व्यथेति भावः । एतेषां व्यतिरेकेऽप्यात्मनो न व्यतिरेक इत्यस्यापकर्षः । सीता तु 'प्राणेभ्योऽपि गरीयसी' इत्युक्तरीत्या जीवितं प्रत्यपि प्रधानभूता । किंच 'अद्यावसितं रामस्य जीवितप्रयोजनम्' इति

---

१ 'आह' इति पा० । २ 'लोकानां' इति पा० ।

**सीता**—अदो* जेव्व राहवधुरंधरो अज्जउत्तो ।

**रामः**—कः कोऽत्र भोः ! । विश्राम्यतादष्टावक्रः ।

**अष्टावक्रः**—(उत्थाय परिक्रम्य च ।) अये, कुमारलक्ष्मणः प्राप्तः । (इति निष्क्रान्तः ।)

(प्रविश्य ।)

**लक्ष्मणः**—जयति जयत्यार्यः ! । आर्य, अर्जुनेन चित्रकरेणास्मदुपदिष्टमार्यस्य चरितमस्यां वीथ्यामभिलिखितम् । तत्पश्यत्वार्यः ।

**रामः**—जानासि वत्स, दुर्मनायमानां देवीं विनोदयितुम् । तत्कियानवधिः ? ।

**लक्ष्मणः**—यावदार्याया हुताशनेशुद्धिः ।

**रामः**—शान्तं पापम् ! । (ससान्त्ववचनम् ।)

* अत एव राघवधुरंधर आर्यपुत्रः ।

वक्ष्यमाणरीत्या मद्यतिरेकप्रयोजनव्यतिरेकवती । पूर्वोक्तस्नेहदयासौख्यैः संतुष्टोऽहं तामवलम्ब्य । तथाभूतामपि मुञ्चतो मम न व्यथेति भावः । सीतामित्यनुक्त्या जानकीमित्युक्तिर्लोकाराधनापेक्षया ब्रह्मवित्तमजनकानुरोधोऽप्यकिंचित्कर इति सूचयति । लोके हि अभिमतवस्तुपरित्यागात्पूर्वकाले तस्य संनिधानात् न दुःखभूयस्त्वम् । परित्यागात्परमपि तस्यातीतत्वात् । न दुःखभूयस्त्वम् । तत्परित्यागकाले तु भवति दुःखभूयस्त्वं तावद्वर्तमानत्वात् । मम तु वर्तमानकालेऽपि न दुःखमिति वर्तमानार्थकमुञ्चत इति पदतो लभ्यते । व्यथेति सामान्यशब्देन मनोव्याधिरपि नेत्यर्थः ॥ १२ ॥ राघवधुरंधरः । रघुवंशश्रेष्ठ इत्यर्थः । राघवपदोपादानं साभिप्रायकम् । शरणागतसंरक्षणभूतदयालोकाराधनैकपररघुवंशजस्य तवेदमनुरूपमित्यभिप्रायः । विश्राम्यताद्विश्रमं प्राप्नोतु । आशिषि परस्मैपदलोटस्तातङ् । 'विश्राम्यताम्' इति पाठे तु परिजनैरिति शेषः । विश्रमवान्क्रियतामित्यर्थः । णिजन्तात्कर्मणि लोट् ॥ अर्जुनेन तन्नाम्ना । वीथ्यां चित्रमयश्रेण्याम् ॥ दुर्मनायमानां दुःखितमनस्काम् । जनकस्य स्वदेशान्प्रति गमनादिति भावः । 'कर्तुः क्यङ् सलोपश्च' । ङित्वादात्मनेपदम् । शानच् । विनोदयितुं दुःखविस्मरणपूर्वकं संतोषं ग्राहयितुम् । 'नुद प्रेरणे' । उपसर्गबलेन उक्तार्थलाभः । तत्कियानवधिः तदित्यव्ययम् । तस्येत्यर्थः । अवधिरन्तः कियान् । किंप्रमाणक इत्यर्थः । अनेकसंख्याकेषु मद्व्यापारेषु कीदृशसंख्यायुक्तोऽस्मद्व्यापारः अस्य चित्रस्यावधिरित्यर्थः ॥ **यावदिति** । हुताशनेन शुद्धिरिति विग्रहः । यावच्छब्दोऽवधारणार्थकः । हुताशनशुद्धिर्यावत् । हुताशनशुद्धिरेवावधिरित्यर्थः । अवधिरिति पूर्वस्मादनुषङ्गः ॥ **शान्तं पापमिति** । योऽयमलीकोपन्यासस्तस्य पीडाहेतुभूतपापशान्तिकरो भवत्विति तात्पर्यम् । लोकोक्तिरियमिष्टजनं प्रत्यनिष्टवचनाक्षमजनाशीर्वचनरूपा ।

१ 'राहवकुल°' इति पा० । २ 'विश्राम्यतां भगवानष्टा' इति पा० । ३ 'वीथिकायां' इति पा० । ४ 'कियन्तमवधिं यावत्' इति पा० । ५ '°विशुद्धि' इति' पा० ।

उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः ।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ १३ ॥

देवि देवयजनसंभवे, प्रसीद । एष ते जीवितावधिः प्रवादः ।

क्लिष्टो जनः किल जनैरनुरञ्जनीय-
स्तन्नो यदुक्तमशुभं च न तत्क्षमं ते ।

ससान्त्ववचनम् । अत्यर्थमधुरवाक्सहितमित्यर्थः ॥ **उत्पत्तीत्यादि** । उत्पत्त्या परिपूतायाः परिशुद्धायाः । कृत्रिमत्वनिरासार्थमिदम् । स्वभावतो दोषप्रतिभटाया इत्यर्थः । अस्याः सीतायाः । पावयन्तीति पावनानि । नन्द्यादित्वाल्ल्युप्रत्ययः । अन्यानि पावनानि पावनान्तराणि । तैरित्यर्थः । किम् । न किमपीत्यर्थः । शुद्धिर्हि दोषनिर्हरणम् । अविद्यमानदोषायाः कथं शुद्धिरिति भावः । किंच अन्तरशब्देन दोषरहितमात्रस्य पावकवस्त्वपेक्षा नास्ति । पावकस्य तु तन्नैरपेक्ष्यं कैमुतिकम् । इयं च केवलं दोषरहिता न किंतु पावका चेति सूच्यते । 'अपि मां पावयेत्साध्वी स्नात्वेतीच्छति जाह्नवी' इति न्यायात् । उक्तमर्थमुत्तरार्धेन दर्शयति—तीर्थोदकमिति । गङ्गादिपावनजलम् । तीर्थशब्दो विशेषणमात्रपरः । यथाश्रुते तीर्थशब्दस्यैव परिशुद्धोदकवाचित्वात् । यद्वा तीर्थानां गुरूणामुदकं पादावनेजनाम्भः । 'आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे' इति श्रुतेः । वह्निश्च अन्यतः शुद्धिमन्यहेतुकशुद्धिं नार्हतः । यथा पावकत्वाविशेषात्तीर्थोदकवह्न्योरितरापेक्षा नास्ति तद्वदस्या अपि पावकत्वाविशेषेण तदपेक्षा नास्तीत्यतिस्फुटम् । किंच विनिगमनाविरहात् वह्नेर्वा सीतासंबन्धतः शुद्धिः किं न स्यादित्याशयः । अग्निप्रवेशानुमतिर्मूढप्रत्यायनार्था वा अग्निप्राशस्त्यार्था वा ॥ १३ ॥ **जीवितावधिरिति** । जीवितस्यावधिर्यस्येति बहुव्रीहिः । यदीयावधिः जीवितावधिः । स इत्यर्थः । प्रसीद । 'अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनी' इत्युक्तरीत्या बहुतरापराधानां क्षिप्रं क्षमापकोऽयमञ्जलिरपराधभूयस्त्वानुगुण्याच्छरीरपातपर्यन्तमनुष्ठेयः । स चाशक्त्या तन्त्रेणानुष्ठीयत इति भावः । **क्लिष्ट इति** । यद्यस्मात्कारणात्क्लिष्टो जनो दुःखितो जनो जनैरनुरञ्जनीयः क्लेशं विस्मार्य लालनीय इत्यर्थः । नतु पूर्वानुभूतदुःखस्मारणेन क्लेशयितव्य इत्यर्थः । तत् तस्मात् । अशुभममङ्गलम् । 'अशिवम्' इति पाठान्तरम् । ते त्वद्विषये । शेषे षष्ठी । नः आवयोः 'अस्मदो द्वयोश्च' (१।२।५९) इति द्वित्वे बहुवचनम् । यदुक्तम् । अस्मत्कर्तृकं यद्वचनमित्यर्थः । 'नपुंसके भावे क्तः' । 'यावदार्याया हुताशनशुद्धिः' इत्युक्तलक्ष्मणवचनमित्यर्थः । अत्र लक्ष्मणवचनस्य रामस्य स्वोक्तित्वैक्याभिसंधिना । 'रामस्य दक्षिणो बाहुर्नित्यं प्राणो बहिश्चरः' इत्युक्तेः । तत् । वचनमित्यनुषज्यते । नः । त्वदेकजीवितयोस्तव निर्दोषतां च जानतोरित्यर्थः । न क्षमं नोचितम् । अयं भावः—बन्धुत्वमित्रत्वानादरेण जनत्वरूपसामान्यधर्म एवानुरञ्जनीयानुरञ्जकभावे पर्याप्तो हेतुः । तत्र 'प्रेयो मित्रं बन्धुता वा समग्राः सर्वे कामाः संपदो जीवितं वा । स्त्रीणां भर्ता धर्मदाराश्च पुंसाम्' इत्युक्तरीत्या सर्वप्रकारप्रियतमायास्तव विषये तथाविधानां अस्माकं पूर्वानुभूतदुःखस्मा-

१ 'कष्टं' इति पा० । २ 'अशिवं' इति पा० ।

नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥ १४ ॥

**सीता**—[1]होदु* अज्जउत्त, होदु । एहि । पेक्खम्ह दाव दे चरिदं ।
(इत्युत्थाय परिक्रामति ।)

**लक्ष्मणः**—इदं तदालेख्यम् ।

**सीता**—(निर्वर्ण्य ।) के† एदे उवरिणिरंतरट्ठिदा उवत्थुवंदि विअ अज्जउत्तं? ।

**लक्ष्मणः**—देवि, एतानि तानि सरहस्यानि जृम्भकास्त्राणि । यानि भगवतो [2]भृशाश्वात्कौशिकमुपसंक्रान्तानि । तेन च ताटकावधे प्रसादीकृतान्यार्यस्य ।

* भवत्वार्यपुत्र, भवतु । एहि । प्रेक्षामहे तावत्ते चरितम् ।
† क एते उपरिनिरन्तरस्थिता उपस्तुवन्तीवार्यपुत्रम्? ।

रणमहापराधो नोचित एव । तत्राप्यलीकनिर्बन्धतत्स्मारणं तु सुतराम् । किंच निर्दोषतां च जानतो राघवयोस्तत्कथनं तु दूरोत्सारितमिति । सुरभिणः कुसुमस्य सुगन्धप्रधानस्य पुष्पस्य मूर्ध्नि स्थितिर्नैसर्गिकी निसर्गत एव । विनयादित्वात्स्वार्थे ठक्प्रत्ययः । सिद्धा प्रसिद्धा चेतनाचेतनसाधारण्येन प्रसिद्धा । चेतनैरवचूडरूपेणाचेतनैः शाखाग्रे च धारणात् । चरणैरवताडनानि न । न दृष्टानीत्यर्थः । अयं भावः—त्रिविधानि तावत्कुसुमान्यवगन्तव्यानि । यानि कान्तिप्रधानानि, सौरभ्यप्रधानानि, उक्तोभयप्रधानानि चेति । तत्र कान्तिप्रधानानि शाल्मलीकुसुमादीनि, सौरभ्यप्रधानानि दमनकादीनि । उभयप्रधानानि मालतीप्रभृतीनि । तत्र सौरभ्यमात्रप्रधानस्यापि न चरणावताडनार्हत्वम् । तस्य घ्राणैकनिरन्तरानुभाव्यत्वात् । एवं नावस्यापि । तस्य दर्शनैकानुभाव्यत्वात् । उभयप्रधानस्य तु सुतरां न चरणावताडनार्हत्वमिति । सुरभिणः कुसुमस्येति पदद्वयोपादानादित्थं व्याख्यातम् । अत्र 'न मुसलैः' इति केचित्पठन्ति । अत्र प्राज्ञस्य पूजनीयस्य लक्ष्मणस्यैकस्य सकृत्किंचिद्वचनमुपमेयमुक्त्वा निहीनबहुतरचरणकरणकानामुपमानतावचनात् तादृशताडनजन्यं सुरभिकुसुमस्य यावदत्याहितं तावल्लक्ष्मणवचनजन्यं सीताया अत्याहितमिति व्यज्यते ॥ १४ ॥ प्रेक्षामहे पश्याम इत्यर्थः ॥ आलेख्यं चित्रम् ॥ उपरि निरन्तरस्थिताः अविरलं स्थिताः । अनुपविष्टा इत्याशयः । तेषां दिव्यास्त्रत्वादुपरिस्थितिर्युक्तेत्युपरिलेखनम् । उपस्तुवन्ति स्तोत्रं कुर्वन्ति । सरहस्यानि । प्रयोगप्रतिसंहारौपयिकमन्त्रादयो रहस्यानि । तत्सहितानीत्यर्थः । जृम्भकास्त्राणि । भृशाश्वात्तन्नाम्नो मुनेः कौशिकं विश्वामित्रमुपसंक्रान्तानि प्राप्तानि । उपसंक्रान्तानीति कर्तृप्रत्ययेन स्वयमेव तानि कौशिकं प्राप्तानीति लभ्यते । तथाच—'भृशाश्वः परःसहस्रपरिवत्सरान्तेवासिने कौशिकाय' इति वक्ष्यमाणं परःसहस्रपरिवत्सरान्तेवासित्वं जृम्भकास्त्ररूपफलगुरुत्वमपेक्ष्यासत्कल्पमिति हृदयम् । तेन च विश्वामि-

१ 'भोदु' इत्युभयत्र पा० । २ 'कृशाश्वात्' इति पा० ।

**रामः**—वन्दस्व देवि, दिव्यास्त्राणि ।

ब्रह्मादयो ब्रह्महिताय तप्त्वा परस्सहस्रं शरदां तपांसि ।
एतान्यदर्शन्गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥ १५ ॥

**सीता**—णमो* एदाणं ।

**रामः**—सर्वथेदानीं त्वत्प्रसूतिमुपस्थास्यन्ति ।

**सीता**—अणुग्गहीदम्हि† ।

**लक्ष्मणः**—एष मिथिलावृत्तान्तः ।

**सीता**—अम्हहे,‡ दलंतणवणीलुप्पलसामलसिणिद्धमसिणसोहमाण-

---

* नम एतेभ्यः ।

† अनुग्रहीतास्मि ।

‡ अहो, दलन्नवनीलोत्पलश्यामलस्निग्धमसृणशोभमानमांसलदेहसौभाग्येन विस्मयस्तिमिततातदृश्यमानसौम्यसुन्दरश्रीरनादरत्रुटितशंकरशरासनः शिखण्डमुग्धमुखमण्डल आर्यपुत्र आलिखितः ।

---

त्रेण प्रसादीकृतानि प्रसादतत्कार्यजृम्भकास्त्रयोरभेदाध्यवसायादित्थमुक्तम् । केवलप्रसादेन दत्तानीत्यर्थः ॥ **ब्रह्मादय इति** । पुराणा ब्रह्मादयश्चतुर्मुखप्रभृतयः । गुरवस्तप उपदेष्टारः । तमोनिवर्तका इत्यर्थः । 'शरदस्तपांसि' इति वा पाठः । तपास्यन्तःकरणनैर्मल्यापादनद्वारा भगवत्साक्षात्कारहेतुभूतकायशोषणव्रतानि । परःसहस्रम् । सहस्रात्परा इत्यर्थः । 'कर्तृकरणे कृता बहुलम्' (२।१।३२) इति बहुलग्रहणात्समासः । सुप्सुपेति वा । परस्परादित्वात्सहस्रशब्दस्य सुडागमः । सहस्रसंख्याधिकसंख्याका इत्यर्थः । 'विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः' इत्यनुशासनादेकत्वात् । शरदः संवत्सरान् । अत्यन्तसंयोगे द्वितीया । तथा च सहस्रसंख्याधिकसंवत्सरेषु निरन्तरं तप्त्वेत्यर्थः । ब्रह्म परमात्मा, प्रधानं च तत्कार्यत्वाज्जगत् ब्रह्मशब्देनोच्यते । तदुक्तम्—'तादर्थ्यादुपचारोऽस्ति क्वचित्स्वस्वामिभावतः । अङ्गाङ्गीभावतात्कर्म्याद्वैपरीत्यादपीष्यते ॥' इति ॥ तस्य हिताय तदपेक्षितेष्टानिष्टप्राप्तिपरिहारसाधनाय तपःफलभूतजृम्भकोपदेशेन राजभिर्विरोधिनिरसनेन जगतः पुरुषार्थसाधननिर्वर्तनसिद्धेरिति भावः । अथवा ब्रह्म वेदस्तस्य हिताय धारणाय । धारणार्थकधाञ्धातोर्नपुंसके भावे क्तः । 'दधातेर्हिः' इति हिभावश्च । अनुत्सादायेति भावः । तपोमयानि तपःस्वरूपाणि । स्वार्थिको मयट् । स्वानि स्वकीयानि तेजांसि एतान्यदर्शन् जृम्भकास्त्राण्यपश्यन् । कार्यकारणनिबन्धनमिदं सामानाधिकरण्यम् । 'दृशिर् प्रेक्षणे' इति धातोः लुङ् । तथा च—बहुतरतपःकार्यभूतानामेतेषां केवलगुरुप्रसादसाध्यत्वम् । ननु शुश्रूषादिसाध्यत्वमिति भावः ॥ १५ ॥ त्वत्प्रसूतिं त्वत्प्रसवम् । त्वत्पुत्रावित्यर्थः । 'द्विधागर्भग्रन्थिस्तदनुदिवसैः' इति वक्ष्यमाणरीत्या यमलत्ववत्पुंप्रजात्वमपि निर्णीतमिति सूच्यते । अन्यथा स्त्रीप्रजात्वे जृम्भकाभ्यनुज्ञानमसंगतं स्यात् । उपस्थास्यन्ति प्राप्स्यन्ति । मामिव स्तोष्यन्तीति वार्थः ॥ **अम्हह इति** । दलितनीलोत्पलवच्छ्यामलं स्निग्धं च चाकचक्य

---

१ 'सहस्राः शरदः' इति पा० । २ 'अपश्यन्' इति पा० ।

मंसलदेहसोहग्गेण विम्हअत्थिमिदतादद्दीसंतसोम्मसुंदरसिरी अणादर-त्थुंडिदसंकरसरासणो सिहंडमुद्धमुहमंडलो अज्जउत्तो आलिहिदो ।

**लक्ष्मणः**—आर्ये, पश्य पश्य ।

संबन्धिनो वसिष्ठादीनेष तातस्तवार्चति ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥ १६ ॥

**रामः**—सुश्लिष्टमेतत् ।

जनकानां रघूणां च संबन्धः कस्य न प्रियः ।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥ १७ ॥

---

युक्तम् । मांसलं स्फीतं तेन । तथाविधेनेत्यर्थः । विशेषणसमासः । देहसौभाग्येन देहसौन्दर्येण । विस्मिता आश्चर्ययुक्ताः अत एव स्तिमिता निश्चलास्ताताः तैर्दृश्यमाना सौम्या आह्लादकरी सुन्दरश्रीर्यस्य स तथोक्तः । प्राकृते आत्मनेपदाभावाद्दीसन्तेत्युक्तिः । त्रुटितं भग्नं शरासनं येन स तथोक्तः ॥ **संबन्धिन इति** । जनकानां जनकापत्यभूतानाम् । लाक्षणिकोऽयं शब्दः । पुरोहितो गौतमो गौतमपुत्रः । 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण्प्रत्ययः । शतानन्दस्तन्नामा । तथा च—एष तव तातो वसिष्ठादीन्संबन्धिनोऽर्चति पूजयति । जनकानां पुरोहितो गौतमः शतानन्दश्चार्चतीत्यनुषङ्गः । यथाक्रमं तव तातो जनकः संबन्धिनो दशरथप्रभृतीनर्चयति । जनकानां पुरोहितो गौतमः शतानन्दश्च वसिष्ठादीनर्चयति चेत्यन्वयः ॥ १६ ॥ **सुश्लिष्टमिति** । हेमारविन्दपरिमलन्यायादिति भावः । **जनकानामिति** । जनकानां जनकवंशोद्भवानां रघूणां रघुवंशोद्भवानां च । लाक्षणिकोऽयं शब्दः । संबन्धोऽपत्यसंबन्धः कस्य न प्रियः ? । सर्वस्यापि प्रिय इत्यर्थः । यत्र संबन्धे कुशिकनन्दनो विश्वामित्रः स्वयं दाता स्वयं प्रतिग्रहीता च । दशरथं प्रति दाता, जनकं प्रतिग्रहीता चेत्यर्थः । अयं भावः—तव मम च परिणयरूपोऽयं संबन्धो जनकदशरथयोरावयोर्जनानां च मध्ये कस्यचिदपि नाप्रियः । तथाहि—जनकानां रघूणामित्यनेन रघुवंश्यान् जनकवंश्यांश्च प्रति नाप्रियत्वमिति लभ्यते । अत्र निमीनामित्यनुक्त्वा जनकानामिति पदोपादानेन 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इति जनके प्रसिद्धं कर्मयोगशीलत्वमिह स्फार्यते । एवं काकुत्स्थानामित्यनुक्त्वा रघूणामित्युक्त्या 'श्रुतस्य यायादयमन्तमर्कस्तथा परेषां युधि चेति पार्थिवः' इत्यादिकालिदासनिरुक्त्या 'लङ्घिबंह्योर्नलोपश्च' इत्यनुशासनेन च लब्धया लङ्घते जानाति सर्वमिति व्युत्पत्त्या 'मनुरिक्ष्वाकवेऽब्रवीत्' इत्यैक्ष्वाकवं रघुकुलसाधारणज्ञानयोगशीलत्वं सूच्यते । तथा चान्यादृशजनकविषये जातोऽपत्यसंबन्धः संबन्धिनामित्यभिमतो भवति । तत्र क्षीरशर्करावदन्योन्यसंपर्करमणीयज्ञानकर्मशीलजनकविषयत्वे तु तस्य हेमारविन्दपरिमलन्यायेनातिश्लाघ्यत्वमिति तान्प्रत्यप्रियत्वव्यावृत्तिः । अत एव चावां प्रत्यपि नाप्रियत्वं यत्र दातेत्यादिनापि जनकदशरथौ प्रत्यप्रियत्वं व्यावर्त्यते । तत्र दशरथं

---

१ 'खुड्डिद०' इति पा० । २ 'द्रष्टव्यं' इति पा० ।

**सीता**—एदे* खु तक्कालकिदगोदाणमंगला चत्तारो भादरो। विआहदिक्खिदा तुम्हे। अम्हो जाणामि, तस्सिं जेव्व पदेशे तस्सिं जेव्व काले वत्तामि!।

**रामः**—

समयः स वर्तत इवैष यत्र मां
समनन्दयत्सुमुखि गौतमार्पितः।
अयमागृहीतकमनीयकङ्कण-
स्तव मूर्तिमानिव महोत्सवः करः ॥ १८ ॥

**लक्ष्मणः**—इयमार्या। इयमप्यार्या माण्डवी। इयमपि वधूः श्रुतकीर्तिः।

---

* एते खलु तत्कालकृतगोदानमङ्गलाश्चत्वारो भ्रातरः। विवाहदीक्षिता यूयम्। अहो जानामि, तस्मिन्नेव प्रदेशे तस्मिन्नेव काले वर्ते!।

---

प्रति अयाचितोपनतत्वाज्जनकं प्रति दुष्करधनुर्भङ्गप्रतिज्ञानिवर्तनरूपमहोपकारकरणाच्च गुर्वनुज्ञाप्राप्तत्वान्महर्षिकारितत्वाच्च नावां प्रत्यप्रियत्वम्। स्वयमित्यनेनाग्रहादिमूलकत्रिशङ्कुयाजनहरिश्चन्द्रोपप्लवव्यावृत्तिः। अत एव जनान्प्रत्यप्रियत्वं निरस्तम्। शिष्टानुमतस्य धर्मत्वे शिष्टकारिते तस्य कैमुतिकसिद्धत्वात्। तथा चापस्तम्बस्मृतिः—'यत्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः' इति। ब्रह्मर्षिर्विश्वामित्र इत्याद्यनुक्त्वा कुशिकनन्दन इति पदोपादानं विश्वामित्रः स्वब्रह्मर्षित्वमविगणय्य भूतपूर्वगत्या क्षत्रियत्वं स्वीकृत्य बन्धुभावेनास्मत्संबन्धिभावेनास्ति असति संबन्धे ब्रह्मर्षिकृत्यानीति व्यञ्जयति ॥ १७ ॥ **एदे खु इति**। गोदानमङ्गलं क्षौरकर्म तस्य मङ्गलार्थत्वान्मङ्गलत्वम्। विवाहेन दीक्षिता विवाहदीक्षिता इति। विवाहहेतुकव्रतवन्त इत्यर्थः। 'दीक्ष मौण्ड्येज्योपनयनव्रतादेशेषु' इति दीक्षधातोः कर्तरि क्तः। तस्मिन्नेव प्रदेश इति प्रत्यभिज्ञादार्ढ्यमिति ॥ **समय इति**। यत्र समये गौतमार्पितः पुरोधसा शतानन्देन प्रतिपादित आगृहीतकमनीयकङ्कणः समन्ताद्गृहीतकमनीयवलयः, तथापि मूर्तिमान् महोत्सव इव स्थितः समनन्दयत्, स एष समयो वर्तत इव। स्मृतिवैशसमिदम्। अत्र सुमुखि 'आगृहीतकमनीयकङ्कणः' इत्युक्त्वा सिद्धसाध्यसमभिव्याहारन्यायेनागृहीतकमनीयङ्कणत्वं प्रति सीताया वदनकमलसौन्दर्यातिशयो हेतुरित्यवगम्यते। अन्यथा 'पाणिं गृह्णीष्व पाणिना' इत्युक्तपाणिपीडनस्य प्रकोष्ठवर्तिमणिवलयग्रहणासंगतेः। तथा च—सीतामुखचन्द्रदर्शनानन्दपारवश्येन सम्यक्करग्रहणाभावात्संवृत्तः। तथात्व एव स पाणिर्मूर्तिमान्महोत्सव इव स्थितः। सम्यक्स्पर्शे तु निःसीमानन्दकर इति व्यज्यते। आगृहीताः सम्यग्गृहीताः श्रृङ्गारमूलकसात्त्विकभावविशेषरूपत्वेन स्पृहणीयाः कङ्कणाः खेदजलबिन्दवो यस्मिन्स तथोक्त इत्यप्याहुः। 'आगृहीतवैवाहिकप्रतिसर' इत्यपि केचित् ॥ १८ ॥ इयमार्या माण्डवीति भरतभार्यात्वात्, इयमपि वधूरिति शत्रुघ्नभार्यात्वात्

---

१ 'तस्सिं' इत्युभयत्र पा०।

**सीता**—वच्छ,* इअं वि[1] अवरा का ? ।

**लक्ष्मणः**—(सलज्जास्मितम् । अपवार्य ।) अये! ऊर्मिलां पृच्छत्यार्या । भवतु । अन्यतः संचारयामि । (प्रकाशम् ।) आर्ये, दृश्यतां द्रष्टव्यमेतत् । अयं च भगवान् भार्गवः ।

**सीता**—(ससंभ्रमम् ।) †कंपिदम्हि ।

**रामः**—ऋषे, नमस्ते ! ।

**लक्ष्मणः**—आर्ये, पश्य । अयमार्येण—(इत्यर्धोक्ते ।)

**रामः**—(साक्षेपम् ।) अयि, बहुतरं द्रष्टव्यम् । अन्यतो दर्शय ।

**सीता**—(सस्नेहबहुमानं निर्वर्ण्य ।) ‡सुट्ठु सोहसि अज्जउत्त, एदिणा विणअमाहप्पेण ।

**लक्ष्मणः**—एते वयमयोध्यां प्राप्ताः ।

**रामः**—(सास्रम् ।) स्मरामि हन्त स्मरामि ! ।

जीवत्सु तातपादेषु नूतने दारसंग्रहे[3] ।
मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः ॥ १९ ॥

---

* वत्स, इयमप्यपरा का ? ।

† कम्पितास्मि ।

‡ सुष्ठु शोभसे आर्यपुत्र, एतेन विनयमाहात्म्येन ।

---

स्नुषात्वेन ग्रहणम् ॥ **अयमिति** । भार्गवः परशुरामः ॥ कम्पितास्मि । येनेति शेषः ॥ **अयमार्येणेत्यादि** । अत्र वैष्णवं धनुरारोपयित्वा समाकृष्टतेजस्क इति वक्तुमुद्युक्तवान् लक्ष्मणः, तावदात्मप्रशंसामसहमानो रामः प्रतिषिद्धवानित्याशयः ॥ साक्षेपं सप्रतिषेधम् । 'क्षिपु निरसने' इत्यस्मात् भावे घञ्प्रत्ययः । अन्यतो दर्शय, अन्यत्र लिखितं दर्शयेति भावः ॥ विनयमाहात्म्येन विनयस्य स्वोत्कर्षतानाविष्करणरूपस्य स्वस्मिन्निकर्षानुसंधानरूपस्य वा माहात्म्यं भूयसा तेनेत्यर्थः ॥ एते वयमयोध्यां प्राप्ताः । तथालिखिता इत्यर्थः ॥ **जीवत्स्विति** । तातपादेषु पितरीत्यर्थः । पूजायां पादशब्दो बहुवचने । 'उत्तमानां स्वरूपं तु पादशब्देन भण्यते' इति । जीवत्सु सप्राणेषु । 'यस्य च भावेन–' (२।३।३७) इति सप्तमी । दारसंग्रहे नूतने सति मातृभिश्चिन्त्यमानानां नस्ते दिवसा गता इत्यन्वयः । गता दिवसास्ते हीति स्मरणाकारप्रदर्शनं वा । अबन्धोरपि रक्षकस्य जीवनमानन्दाय । सर्वविधसंरक्षणशीलस्य पितुर्जीवनं तु निरवधिकाह्लादजनकम् । किं च दाराणां सततपरिचयेऽपि प्रियैकवेषत्वम्, नूतनसंग्रहे तु अमन्दानन्दहेतुत्वम् । स्वरूपसत्त्वैव माता निरतिशयसौख्यकारिणी । तत्रापि सा लोकप्रसिद्धसर्वविधसंरक्षणानि कृत्वा ततोऽप्यधिकानि चिन्तयति चेत् निःसीमान-

---

१ 'अपि' इति पा० । २ 'वत्स' इति पा० । ३ 'नवे दारपरिग्रहे' इति पा० ।

इयमपि तदा जानकी

पतनविरलैः प्रान्तोन्मीलन्मनोहरकुड्मलै-
र्दशनकुसुमैर्मुग्धालोकं शिशुर्दधती मुखम् ।
ललितललितैर्ज्योत्स्नाप्रायैरकृत्रिमविभ्रमै-
रकृत मधुरैरम्बानां मे कुतूहलमङ्गकैः ॥ २० ॥

न्दलाभः । एवमपरिच्छिन्नानन्दकन्दलहेतुत्वाद्दिवसानां तच्छब्देन निर्देशः । अत्र मातृभिरिति न यथा स्वसंबन्धः सर्वासां रामसर्वविषयहिताचिन्तावत्त्वम् । संकोचे मानाभवात् । कैकेय्याः क्रौर्यौपाधिकम् । एवं चेदप्यतिशयितानन्दहेतुः सपत्नीमातृप्रयुक्तोपप्लवस्य सगरादिषु प्रसिद्धत्वेन तदभावस्याभिमतत्वात् । तातपादजीवनादीनां मध्य एकैकमेवानन्दहेतुः । समुदितानि तु सुतरामिति भावः ॥ १९ ॥ 'नूतने दारसंग्रहे' इत्युक्तं विशिनष्टि—**इयमपि तदेत्यादिना** । **पतनेति** । शिशुः शैशवान्तवती । शिशुप्रायेत्यर्थः । 'पतिसंयोगसुलभं वयो दृष्ट्वा च मे पिता' इत्युक्तेः । पतनेन प्रस्थितदशनपतनेन । प्रान्तोन्मीलदित्युक्तेः । विरलैः सान्तरालैः । प्रान्तेत्याद्यत्र उन्मीलच्छब्दः प्ररोहद्दन्तपरः । दशनकुसुमैरिति रूपकसाहचर्यात् । तथा च उन्मीलदेव उद्यन्नूतनदशनाङ्कुर एव मनोहरकुड्मलमुन्मीलन्मनोहरकुड्मलं प्रान्ते उन्मीलन्मनोहरकुड्मलं येषामिति बहुव्रीहिः । यद्वा कुड्मलशब्दो मुकुलसदृशदशनपरः । प्रान्तोन्मीलन्ति मनोहरकुड्मलानि येषामित्यर्थः । रूपकातिशयोक्तिरलंकारः । **दशनकुसुमैरिति** तु रूपकमुपमा वेति संकर इत्यपि वदन्ति । दशना एव कुसुमानि तैर्धावल्यशिखरित्वादिसादृश्याद्रूपणम्, उपमा वा । हेतुभिः । मुग्धः सुन्दर आलोको यस्य तत्तथोक्तम् । यद्वा दशनकुसुमैरिति इत्थंभूतलक्षणे तृतीया । दशनकुसुमैरुपलक्षितमित्यर्थः । मुग्धालोकं सुन्दरकटाक्षं मुखं दधती इयं सीता ललितादपि कुसुमादपि ललितैः सुकुमारैः । यद्वा ललितं नाम हासाद्यन्यतमविशेषः । तदुक्तम्—'सुकुमाराङ्गविन्यासो ललितं परिकीर्तितम्' इति । तेन ललितैः । विलसितैरित्यर्थः । 'लड विलासे' कर्तरि क्तः । लडयोरेकत्वम् । ज्योत्स्नाप्रायैर्ज्योत्स्नासदृशैः । यद्वा ज्योत्स्ना कान्तिः । लावण्यमिति यावत् । तत्प्रायैः तत्प्रचुरैरित्यर्थः । प्रायशब्दः प्रचुरवाची । जलप्रायो देश इतिवत् । लावण्यस्वरूपं तु 'भूयिष्ठं तेज एवाद्भिर्बहुलाभिर्मृदूकृतम् । चक्षुरानन्दजननं लावण्यमिति कथ्यते ॥' इति । अकृत्रिमाः स्वाभाविका विभ्रमा विलासा येषां तानि । तैरित्यर्थः । विभ्रमशब्दो गोबलीवर्दन्यायेन माधुर्यललितान्यपरः । यद्वा 'विभ्रमस्त्वरयाकालभूषास्थान' इत्युक्तविभ्रमपरः । सोऽकृत्रिमो येषु तथोक्तैरित्यर्थः । **मधुरैः** प्रियैरित्यर्थः । 'अभूषणेऽपि रम्यत्वं माधुर्यमिति कथ्यते' इत्युक्तमाधुर्ययुक्तैरित्यर्थः । अनुकम्पितैरङ्गैरङ्गकैः । 'अनुकम्पायाम्' इति कन्प्रत्ययः । अतिसुकुमारतया गाढालिङ्गनादिषु दयनीयैरित्यर्थः । तदाह **कालिदासः**—'सदयं सुन्दरि गृह्यते रसोऽस्य', 'पीतं मया सदयमेव रतोत्सवेषु' इति । **उद्दण्डकविश्च** 'इमां काङ्क्षेऽहमारभ्य उरसि

१ 'प्रतनुविरलैः' इति पा० । २ 'कुन्तलैः' इति पा० । ३ 'मुकुलैः' इति पा० । ४ 'मधुरैरम्बानां' इति पा० ।

लक्ष्मणः—एष मन्थरावृत्तान्तः ।

रामः—(सत्वरमन्यतो दर्शयन् ।) देवि वैदेहि,

इङ्गुदीपादपः सोऽयं शृङ्गवेरपुरे पुरा ।
निषादपतिना यत्र स्निग्धेनासीत्समागमः ॥ २१ ॥

लक्ष्मणः—(विहस्य, स्वगतम् ।) अये ! मध्यमाम्बावृत्तान्तमन्तरितमार्येण ।

सीता—अम्हो,* एसो जडासंजमणवुत्तंतो ! ।

लक्ष्मणः—

पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतम् ।
धृतं बाल्ये तदार्येण पुण्यमारण्यकव्रतम् ॥ २२ ॥

* अहो, एष जटासंयमनवृत्तान्तः ! ।

सदयम्' इति । यद्वा अल्पैरङ्गैरङ्गकैः । 'अल्पे' (५।३।८५) इति सूत्रेण कन्प्रत्ययः । अल्पत्वं चेह तनुत्वमभिप्रेतम् । तदुक्तम्—'स्वभावतनुका नूनम्' इति अनेन 'सुश्लिष्टसंधिबन्धत्वं सौन्दर्यमिति कथ्यते' इत्युक्तसौन्दर्यमप्युक्तं भवति । तेन विना तनुत्वस्य दोषत्वात् । मेऽङ्गानां कुतूहलमकृत कृतवती । 'डुकृञ् करणे' सिचो लोपः । कर्त्रभिप्राय आत्मनेपदेन रामाङ्गकुतूहलकरणफलं सीताया इत्यवगम्यते । 'अद्वैतं सुखदुःखयोः' इति वक्ष्यमाणत्वात् । केचित्तु 'अम्बानाम्' इति पाठ इत्याहुः ॥२०॥ मन्थरावृत्तान्तस्तत्प्रयत्नफलपट्टाभिषेकान्तरायरूपः ॥ इङ्गुदीति । स्निग्धेन स्नेहवता निषादपतिना गुहेन समागमः संबन्धः ॥ २१ ॥ मध्यमाम्बावृत्तान्तमिति क्लीबत्वं प्रामादिकम् । अन्तशब्दं त्यक्त्वा मध्यमाम्बावृत्तमन्तर्हितमिति पठनीयमित्याहुः ॥ जटासंयमनं जटाबन्धनम् ॥ पुत्रेति । पुत्रेषु संक्रान्ता स्वयमेवाश्रयशैथिल्यादागता । स्वतः संक्रान्तेत्यर्थः । 'गत्यर्था–' ( ३।४।७२ ) इति सूत्रेण कर्तरि क्तः । तथाविधा लक्ष्मीर्येषां ते तथोक्तास्तैः उरःप्रभृतित्वात् कप् । वृद्धाश्च ते इक्ष्वाकवश्चेति विग्रहः । इक्ष्वाकुवंश्या इत्यर्थः । तैर्यद्व्रतं धृतं तत्पुण्यं व्रतमार्येण बाल्ये धृतमिति योजना । आरण्यकानां व्रतम् । अरण्यचरमनुष्यसंबन्धि व्रतमित्यर्थः । अत्र पुत्रसंक्रान्तलक्ष्मीकैरित्यनेन पुत्रवत्त्वमुपभुक्तराज्यत्वम्, संक्रान्तेति क्तप्रत्ययेन यावच्छरीरशैथिल्यमुपभुक्तराज्यवत्त्वम्, वृद्धेत्यनेन वार्धकं चावगम्यते । एवं चैतेषां समुदितानां सत्त्व एव पूर्वेषामारण्यकव्रतधारणं न तु यत्किंचित्सत्त्वे । रामस्य तु एतेषां सर्वेषामभावेऽप्यारण्यकव्रतधारणम् । बाल्ये इत्यनेन पुत्रवत्त्वोपभुक्तराज्यकत्वशरीरशैथिल्यवार्धकाभावानां लाभात् । व्रतमित्यनेन असमञ्जसादिव्यावृत्तिः । व्रतस्य पुण्यत्वाव्यभिचारात् पुण्यमिति विशेषणं प्रसिद्धव्यावृत्त्यर्थम् । तद्धि अनुष्ठातुरेव पुण्यफलसाधनम् । इदं तु सकलभुवनामी-

१ 'एषा मन्थरा' इति पा० । २ 'अनुत्तरं' इति पा० । ३ 'वृत्तान्तोऽन्तरितः' इति पा० । ४ 'कृतम्' इति पा० ।

**सीता**—एसा* पसण्णपुण्णसलिला भअवदी भाईरही ।

**रामः**—रघुकुलदेवते, नमस्ते ! ।

तुरगविचयव्यग्रानुर्वीभिदः सगराध्वरे
कपिलमहसा [1]रोषात्प्लुष्टान्[2]पितुश्च पितामहान् ।
अगणिततनू[3]तापस्तप्त्वा तपांसि भगीरथो
भगवति तव स्पृष्टानद्भिश्चिरा[4]दुदतीतरत् ॥ २३ ॥

सा त्वमम्ब, स्नुषायामरुन्धतीव सीतायां शिवानुध्या[5]ना भव ।

**लक्ष्मणः**—एष भरद्वाजावेदितश्चित्रकूटयायिनि वर्त्मनि वनस्पतिः कालिन्दीतटे वटः श्यामो नाम ।

(रामः सस्पृहमवलोकयति ।)

**सीता**—सुमरेदि† वा [6]तं पदेसं अज्जउत्तो ? ।

**रामः**—अयि, कथं विस्मर्यते ? ।

अलस[7]ललितमुग्धान्यध्वसंपातखेदा-
दशिथिलपरिरम्भैर्द[8]त्तसंवाहनानि ।

---

* एषा प्रसन्नपुण्यसलिला भगवती भागीरथी ।

† स्मरति वा तं प्रदेशमार्यपुत्रः ? ।

---

ष्टसाधनमिति । आर्येणेत्यनेनासामर्थ्यनिबन्धनलोकवादभीत्यादिना न कृतम् । किंतु वैदिकश्रद्धामूलमित्यवगम्यते ॥ २२ ॥ प्रसन्नपुण्यसलिला स्वच्छपरिशुद्धजला ॥ **तुरगेति** । सगराध्वरे तुरगस्येन्द्रापहृताश्वस्य विचयेऽन्वेषणे व्यग्रान्ससंभ्रमान् । अत एवोर्वीभिदो भूमिखानिनः । भिदेः क्विप् । कपिलमहसा तन्नामकमुनितेजसा रोषाद्धेतोः प्लुष्टान् दग्धान् । 'प्लुष दाहे' । कर्मणि क्तः । तवाद्भिः स्पृष्टानुदतीतरदुत्तारयति स्म । तरतेर्णिचि लुङ् ॥ २३ ॥ शिवे मङ्गलेऽनुध्यानं यस्या इति विग्रहः । एतेन बीजानुगुणप्रोत्साहनरूपं भेदो नाम संध्यङ्गमुक्तम् । तदुक्तम्–'बीजानुगुणप्रोत्साहनं भेदः' इति । वनस्पतिरपुष्पत्वे सति फलवान् । वटः श्यामो नाम तथा प्रसिद्धिमान् ॥ **अलसेत्यादि** । अध्वनि मार्गे संपातः सम्यग्गमनम् । रामलक्ष्मणापेक्षया त्वरितगमनमिति भावः । 'अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान्' इत्युक्तत्वात् । तेन यः खेद आयासस्तस्माद्धेतोरलसललितमुग्धान्यलसानि प्रसरणाकुञ्चनासमर्थानि ललितानि मृदूनि मुग्धानि सुन्दराणि । स्वभावतः सौन्दर्यसौकुमार्ययोः सत्त्वेऽप्यध्वसंपातखेदादलसललितमुग्धानीत्युक्त्या मार्गगमनायासेन तयोर्द्विगुणीभाव इति भावः । 'तथापि दृशोः प्रिया' इत्युक्तेः

---

१ 'अमर्षात्' इति पा० । २ 'पितुः प्रपिता०' इति पा० । ३ 'तापं' इति पा० । ४ 'उददीधरत्' इति पा० । ५ 'ध्यानपरा' इति पा० । ६ 'पदं' इति पा० । ७ 'लुलित' इति पा० । ८ 'संजात' इति पा० ।

परिमृदितमृणालीदुर्बलान्यङ्गकानि
त्वमुरसि मम कृत्वा यत्र निद्रामवाप्ता ॥ २४ ॥

**लक्ष्मणः**—एष विन्ध्याटवीमुखे विराधसंवादः ।

**सीता**—अलं* दाव एदिणा । पेक्खम्मि दाव अज्जउत्तसहत्तधरिदतालवुंतादवत्तं अत्तणो अच्चाहिदं दक्खिणारण्णपहिअत्तणं ।

**रामः**—

एतानि तानि गिरिनिर्झरिणीतटेषु
वैखानसाश्रिततरूणि तपोवनानि ।
येष्वातिथेयपरमा यमिनो भजन्ते
नीवारमुष्टिपचना गृहिणो गृहाणि ॥ २५ ॥

**लक्ष्मणः**—अयमविरलानोकहनिवहनिरन्तरस्निग्धनीलपरिसरारण्यपरिणद्धगोदावरीमुखकन्दरः संततमभिष्यन्दमानमेघमेदुरितनीलिमा जन-

* अलं तावदेतेन । पश्यामि तावदार्यपुत्रस्वहस्तधृततालवृन्तातपत्रमात्मनोऽत्याहितं दक्षिणारण्यपथिकत्वम् ।

अशिथिलपरिरम्भैर्दृढतरालिङ्गनैः । बहुवचनमालिङ्गनावृत्त्यभिप्रायकम्, कामतन्त्रप्रसिद्धालिङ्गनभेदबाहुल्याभिप्रायकं वा । दत्तानि संवाहनानि येभ्य इति चतुर्थीबहुव्रीहिः । संवाहनं नामाङ्गानां गमनादिजनितायासशमनौपयिकदृढतमस्पर्शविशेषः । परितः साकल्येन मृदिता निष्पीडिता या मृणाली तद्वद्दुर्बलानि स्वस्वधारणसामर्थ्यरहितान्यङ्गकानि । 'अनुकम्पायाम्' इति कन्प्रत्ययः । त्वं ममोरसि कृत्वा यत्र यस्मिन्प्रदेशे निद्रामवाप्ता स कथं विस्मर्यत इति योजना । अयं भावः—पूर्वमध्वसंपातखेदः, ततो ललितत्वसौकुमार्यद्विगुणीभावः, ततस्तद्दर्शनवशादशिथिलालिङ्गनबाहुल्यम्, ततश्च तत्संवाहनता, ततः स्वधारणसामर्थ्यविरहदौर्बल्यम्, ततो रामवक्षःस्थल एव लग्नता, ततस्तदीयसौकुमार्यपारवश्यात्तत्रैव निद्रावाप्तिरिति ॥ २४ ॥ स्वहस्तधृततालपत्रमेव तालवृन्तं तदेवातपत्रं यस्मिन्निति विग्रहः । आत्मनोऽत्याहितं जीवितनिरपेक्षक्रियारूपम् । दक्षिणारण्ये पथिकत्वमिति विग्रहः ॥ **एतानीति** । येषु तपोवनेषु । अतिथिषु विषये साधुरातिथेयोऽतिथिसत्कारः परमः येषां ते पुरुषा इत्यर्थः । यमिन इति द्वितीयान्तम् । पक्वान्नाधिकारिणो यतीन् भजन्ते सेवन्ते । किं च नीवारमुष्टेः पचनं यैस्ते गृहिणो गृहाणि भजन्ते । यद्वा यमिन इति गृहिविशेषणपदं प्रथमान्तरम्, यमवन्तः । इदं धर्मादीनामप्युपलक्षणम् । आतिथेयपरमा गृहिणो गृहस्था गृहाणि भजन्त इत्यन्वयः । यद्वा आतिथेयपरमा आतिथ्यापेक्षिणो नीवारमुष्टेः पचनं येभ्य इति तथोक्ता यमिनः पक्वान्नाधिकारिणः कर्तारो गृहिणो गृहस्थस्य

१ '°श्रमतरूणि' इति पा० । २ 'शमिनो' इति पा० ।

स्थानमध्यगो गिरिः प्रस्रवणो नाम ।

रामः—

स्मरसि सुतनु तस्मिन्पर्वते लक्ष्मणेन
प्रतिविहितसपर्यासुस्थयोस्तान्यहानि ।
स्मरसि [1]सरसनीरां तत्र गोदावरीं वा
स्मरसि च तदुपान्तेष्वावयोर्वर्तनानि ॥ २६ ॥

किं[2] च ।

किमपि किमपि मन्दं मन्दमासक्तियोगा-
दविरलितकपोलं जल्पतोरक्रमेण ।
अशिथिलपरिरम्भव्यापृतैकैकदोष्णो-
रविदितगतयामा रात्रिरेव व्यरंसीत् ॥ २७ ॥

गृहाणि भजन्ते । तानि वैखानसैर्मुनिभिराश्रितास्तरवो येषु यथोक्तानि एतानीत्यन्वयः ॥ २५ ॥ **अयमविरलेत्यादि** । अरण्यपरिणद्धा गोदावरी मुखेषु येषां तानि कन्दराणि यस्य स तथोक्तः । पर्वतानां स्वतोऽपि नीलत्वान्मेदुरितेत्युक्तम् ॥ **स्मरसीति** । हे सुतनु शोभना तनुर्यस्या इति विग्रहः । तनूरित्यूङन्ताद्वा संबुद्धौ ह्रस्वः । तस्मिन्पर्वते । प्रस्रवण इत्यर्थः । विहिताश्च ताः सपर्याश्च विहितसपर्याः । विहितसपर्यासु विहितसपर्यासु (?) इति प्रतिविहितसपर्यम् । वीप्सायामव्ययीभावः । तत्र आसमन्तात्सुखेन स्थितयोरित्यर्थः । 'सुः पूजायाम्' इति कर्मप्रवचनीयत्वात् षत्वाभावः । यद्वा प्रतिविहिताभिः । प्रत्युपकारीकृताभिरित्यर्थः । अस्मत्कृतवनानुगमनानुज्ञामहोपकारस्येति शेषः । आवयोरित्याकृष्यते । सरसनीरां स्वाभाविकमधुररसयुक्तजलवतीम् । अनेन समुद्रसंगमसमीपस्थजलं व्यावर्त्यते । तत्रास्याः क्षारप्रसिद्धेर्वा किमित्यर्थः । अत एव पूर्वोत्तरयोः किमिति लभ्यते । अत्र प्राथमिकत्वाद्वाह्यत्वाच्च प्रथमं तान्यहानीति दिनस्योक्तिः । आनन्तर्याद्रहस्यत्वाच्च आवयोर्वर्तनानीत्यस्यानन्तरोक्तिः । तदुभयोपकारित्वाद्गोदावर्या मध्योक्तिरिति ध्येयम् ॥ २६ ॥ **किमपीति** । आसक्तिः रत्यभिनिवेशो विषयानुभूत्यानवस्थानलक्षणस्तस्याः योगात् संबन्धाद्धेतोः अविरलितौ निरन्तरीकृतौ कपोलौ यस्मिन्कर्मणि तथोक्तम् । मन्दं मन्दमतिसूक्ष्माक्षरं यथा तथा अक्रमेणान्योन्यस्वभावविरुद्धप्रक्रियया किमपि किमपि । इदं च गुप्तकथनम् । जल्पतोरशिथिले गाढे परिरम्भे व्यापृतमेकैकं दोः ययोरिति पूर्वस्मादनुषङ्गः । शेषे षष्ठीयम् । अविदितं यथा तथा गता यामा यस्यास्तथाविधा रात्रिरेव व्यरंसीत् विरमति स्म । नैवासक्तियोगविस्रम्भसंलापक्रीडादय इत्यर्थः । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । 'यमरम-' (७।२।७३) इति सगिटौ । अत्र अविदितगतकालेति वाविदितगतनाडीति वा अकृत्वा यामपदोपादानादयमाशयोऽवगम्यते । 'व्रजति रतिसुखार्थं

१ 'सुरस॰' इति पा॰ । २ 'अपि च' इति पा॰ ।

लक्ष्मणः—एष[1] पञ्चवट्यां शूर्पणखाविवादः ।

सीता—हा* अज्जउत्त, एत्तिअं दे[2] दंसणं ! ।

रामः—अयि वियोगत्रस्ते[3], चित्रमेतत् ! ।

सीता—जहा[4]† तहा होदु । दुज्जणो असुहं उप्पादेइ ।

रामः—हन्त ! वर्तमान इव मे जनस्थानवृत्तान्तः प्रतिभाति ।

---

* हा आर्यपुत्र, एतावत्ते दर्शनम् ! ।

† यथा तथा भवतु । दुर्जनोऽसुखमुत्पादयति ।

---

चित्रिणीमग्रयामे व्रजति दिनरजन्या हस्तिनीं च द्वितीये । गमयति च तृतीये शङ्खिनीमार्द्रभावं रमयति रमणीयां पद्मिनीं तुल्ययामे ॥' इत्युक्तप्रकारेण पद्मिन्यादीनां सुरतसौख्यातिशयाय यामविशेषा विधीयन्ते । तथा च पद्मिनीपाञ्चालादीनां स्वस्वविहितयामप्रतीक्षणं विहितेतरयामानां कथंचिदतिवाहनं च सिद्धम् । एवं च सीतारामयोः पद्मिनीपाञ्चालयोस्तुर्ययामस्यैव सुरतयोग्यत्वेन निरतिशयसुखावच्छेदककालत्वात्तस्याविदितगतत्वं किंतु तदुच्यमानं तदितरयामेषु पर्यवस्यतीति तद्वृत्तेषामतिशयितसुखकालत्वं सिद्ध्यति । तेषामतिशयितकालत्वमान्तरसंभोगेनैवेति किमपि किमपीत्यादिभिरवगम्यते । तथाहि किमपि किमपीत्यस्य सुरतकालीनवक्तव्यजातमेवार्थः । गुप्तकथनात् । एवं च किमपि किमपि जल्पतोरित्यत्र मन्दंमन्दमविरलितकपोलमित्युभयत्र जल्पनेऽन्वेति अक्रमेणेत्यपि तथा । एवं च सुरतकालीनजल्पनस्य मान्द्यातिशयोक्तिकथनादार्द्रवाक्त्वं सीताया गम्यत इत्युक्ताद्रतिविशेषात्फुल्लजृम्भिताख्यबन्धविशेषौ सूच्येते । तदुक्तं **काञ्चीनादेन**–'उत्फुल्लजृम्भितयोः स्त्रिया आर्द्रवचो न क्रोधः' इति । तल्लक्षणं तु अविरलितकपोलत्वमुपविष्टयोरेव सुलभमिति । अक्रमेणेति पुरुषायितं सूच्यते । तच्च भ्रामरादिभेदात्त्रिविधमप्यत्र बोध्यम् । अत्र पुरुषायितस्य 'स्वेच्छया भ्रमणीवल्लभ–' इत्युक्तत्वात्स्वेच्छैव निमित्तमिति बोध्यम् । अश्लिथिलेत्यादिनापार्श्वशायिनोः सुरतमिति लभ्यते । अन्यथा उभाभ्यामेव बाहुभ्यां किं न स्यात् ? । एवं कतिपयैरेव बन्धविशेषै रात्रेरेवावसितत्वाद्बहूनां क्रीडाविशेषाणां तद्धेतुभूतासक्तियोगस्य वाऽविरतत्वाद्रात्रिरेव व्यरंसीदित्युक्तम् । इदमेवाभिसंधाय 'बिन्दुमात्रं विशिष्यते' इति कालिदासेनोक्तम् । वस्तुतस्तु संलापादिबाह्यसंभोग एव स्वारस्यमिति सुधियो विभावयन्तु ॥ २७ ॥ **एष इति** । शूर्पणखाविवादः । रामेण लक्ष्मणं प्रति तेन रामं प्रति प्रेषणादिरिति भावः । 'नखमुखात्संज्ञायाम्' (४।१।५८) इति ङीषो निषेधः । 'पूर्वपदात्' इति णत्वम् ॥ **वियोगत्रस्तेति** । वियोगात् त्रस्त इति विग्रहः । 'पञ्चमी' इति योगविभागात्समासः ॥ असुखं

---

१ 'एषा पञ्चवट्यां शूर्पणखा' इति पा० । २ 'जेव्व' इति पा० । ३ 'विप्रयोग' इति पा० । ४ 'जधा तधा भोदु' इति पा० ।

**लक्ष्मणः**—

अथेदं रक्षोभिः कनकहरिणच्छद्मविधिना
तथा वृत्तं पापैर्व्यथयति यथा क्षालितमपि ।
जनस्थाने शून्ये विकलकरणैरार्यचरितै-
रपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ २८ ॥

**सीता**—(सास्रमात्मगतम् ।) *अम्हो, दिणअरकुलाणंदणो एव्वं वि मह कालणादो किलंतो आसि ।

**लक्ष्मणः**—(रामं निर्वर्ण्य साकूतम् ।) आर्य, किमेतत् ? ।

अयं तावद्बाष्पस्त्रुटित[1] इव मुक्तामणिसरो
विसर्पन्धाराभिर्लुठति धरणीं जर्जरकणः ।
निरुद्धोऽप्यावेगः स्फुरदधरनासापुटतया
परेषामुन्नेयो भवति चिरमाध्मातहृदयः[2] ॥ २९ ॥

**रामः**—वत्स,

तत्कालप्रियजनविप्रयोगजन्मा
तीव्रोऽपि प्रतिकृतिवाञ्छया विसोढः ।

---

* अहो, दिनकरकुलानन्दन एवमपि मम कारणात्क्लान्त आसीत् ।

---

दुःखम् ॥ **अथेति** । अथ विकलकरणैरार्यचरितैः । यथा ग्रावापि रोदिति, वज्रस्यापि । हृदयं दलति, तथा पापै रक्षोभिर्जनस्थाने शून्ये सति कनकहरिणच्छद्मविधिना वृत्तमिदं क्षालितमपि व्यथयतीत्यन्वयः । अथ शूर्पणखाचित्रदर्शनान्तरम् । यथा येन प्रकारेण विकलानि स्वस्वव्यापारशून्यानि करणानि चक्षुरादीनि येषु तथोक्तैरार्य-चरितैर्मूर्च्छाप्रभृतिव्यापारैर्ग्रावापि शिलापि रोदिति रोदनं करोति । 'रुदादिभ्यः' इतीट् । वज्रस्यापि वज्रादन्येनाभेद्यस्य वज्रस्यापि हृदयं मध्यप्रदेशो दलति द्विधा भिन्नं भवति, तथा तेन प्रकारेण वृत्तमिति संबन्धः । जनस्थाने पापै रक्षोभिः शून्ये सति । खरदूषणादिवधानन्तरमित्यर्थः । कनकहरिणच्छद्मविधिना स्वर्णमारीचमायिकमृगव्या-जकरणेन वृत्तं निष्पन्नमिदमिति सीताहरणादेश्चित्रस्याङ्गुल्या निर्देशः । क्षालितमपि प्रति-कृतमपि व्यथयति दुःखं जनयति । शूर्पणखानन्तरं सीताहरणं लिखितमिति भावः । अत्र ग्रावापि रोदितीत्यादिकं नायोगे योगकल्पनम् । किंतु वास्तवमेव । 'अपि वृक्षाः परिम्लानाः' इतिवदुपपत्तेः । एवं स्मृत्वाऽद्यापि रोदितीत्यवगम्यते ॥ २८ ॥ **आर्येति** । एतत् द्रक्ष्यमाणम् ॥ **अयं तावदिति** । त्रुटितश्छिन्न आवेगो दुःखातिशयः । अधरश्च नासापुटश्चेति विग्रहस्तयोर्द्वन्द्वश्च । अतो न नासाशब्दे ह्रस्वः । उन्नेयोऽनुमेय आध्मात-हृदयो गद्गदशब्दयुक्तकण्ठः । 'ध्मा शब्दे' इति धातोः कर्मणि क्तः । नेदं चित्रकथनं किंतु तादात्विकवास्तवावस्थाकथनमेव । तत्कथयेत्यादिप्रतिवचनानुरूप्यात् ॥ २९ ॥ **तत्का-**

---

१ 'ते बाष्पौघः' इति पा० । २ 'भराध्मात०' इति पा० ।

दुःखाग्निर्मनसि पुनर्विपच्यमानो
हृन्मर्मव्रण इव वेदनां तनोति[1] ॥ ३० ॥

**सीता**—हद्धी* हद्धी ! अहं वि अदिभूमिं गदेण रणरणएण अज्ज-उत्तसुण्णं विअ अत्ताणं पेक्खामि ।

**लक्ष्मणः**—(स्वगतम् ।) भवतु । आक्षिपामि[2] । (चित्रं विलोक्य प्रकाशम् ।) अथैतन्मन्वन्तरपुराणस्य[3] तत्रभवतस्तातजटायुषश्चरित्रविक्रमोदाहरणम् ।

**सीता**—हा† ताद, णिव्वूढो दे अवच्चसिणेहो !

**रामः**—हा तात काश्यप शकुन्तराज, क नु खलु पुनस्त्वादृशस्य महतस्तीर्थभूतस्य साधोः संभवः ! ।

**लक्ष्मणः**—अयमसौ जनस्थानस्य पश्चिमतः कुञ्जवान्नाम पर्वतो दनु-कबन्धाधिष्ठितो दण्डकारण्यभागः । तदिदम[4]मुष्य परिसरे मतङ्गाश्रमपदम् । तत्र श्रमणी[5] नाम सिद्धा शबरतापसी । तदेतत्पम्पाभिधानं पद्मसरः ।

**सीता**—जत्थ‡ किल अज्जउत्तेण विच्छिण्णामरिसधीरत्तणं पमुक्क-कण्ठं परुण्णं आसि ।

---

* हा धिक् हा धिक् ! । अहमप्यतिभूमिं गतेन रणरणकेनार्यपुत्रशून्यमिवात्मानं पश्यामि ।

† हा तात, निर्व्यूढस्तेऽपत्यस्नेहः ।

‡ यत्र किलार्यपुत्रेण विच्छिन्नामर्षधीरत्वं प्रमुक्तकण्ठं प्ररुदितमासीत् ।

---

**लेति** । प्रतिकृतिषु प्रतिक्रियासु वाञ्छया आदरेण विपच्यमानः । स्वयमेव परिपाकमाश्रित्येत्यर्थः । कर्मणः कर्तृत्वविवक्षया 'कर्मवत्कर्मणा' इत्यातिदेशिकयगात्मनेपदम् । इदं च मध्यमणिन्यायेन पूर्वोत्तराभ्यामन्वेति । तनोति । विस्तारयतीत्यर्थः ॥३०॥ भूमिमतिक्रान्तोऽतिभूमिः । 'अत्यादयः' इति समासः । भावप्रधानो निर्देशः । अतिभूमित्वं गतेनेत्यर्थः । वैपुल्यं प्राप्तेनेति यावत् । रणरणकेन भवसंभ्रमेण । आक्षिपाम्यन्यतो मनःप्रवर्तनेन पूर्वोक्तं विस्मारयामि । **अथैतदिति** । अन्यो मनुर्मन्वन्तरम् । मयूरव्यंसकादित्वात्समासः । मन्वन्तरात्पुराणस्येति विग्रहः । सुप्सुपेति समासः । तातजटायुषः पितृसखत्वात्तातपदव्यपदेशः । चरित्रं स्ववृत्तम् । विक्रमः शौर्यम् । उदाहरणं सदृशचित्रलेखनमिति भावः । **हा तातेति** । काश्यपः कश्यपपुत्रः । तीर्थभूतस्य हितोपदेष्टुः ॥ **एतस्मिन्निति** । मदेन कलं कूजितं येषां ते तथोक्ताः । तथाविधानां मल्लिकाक्षाणां हंसविशेषाणां पक्षैर्गरुद्भिर्व्याधूताः कम्पिताः स्फुरन्त उरवो दण्डा येषां तानि पुण्डरीकाणि येषु ते तथोक्ताः । कुवलयिनश्च विभागाः प्रदेशा बाष्पाम्भसः परिपतनोद्गमयोर-

---

१ 'करोति' इति पा० । २ 'अन्यतः क्षि°' इति पा० । ३ '°गृध्रराजस्य' इति पा० । ४ 'ऋष्यमूकपरि°' इति पा० । ५ 'श्रमणा' इति पा० ।

**रामः**—देवि, परं रमणीयमेतत्सरः ।

एतस्मिन्मदकलमल्लिकाक्षपक्षा
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
संदृष्टाः कुवलयिनो मया विभागाः ॥ ३१ ॥

**लक्ष्मणः**—अयमार्यो हनूमान् ।

**सीता**—एसो* सो चिरणिव्वूढजीवलोअपच्चुद्धरणगुरुओवआरी महानुभावो मारुदी ।

* एष स चिरनिर्व्यूढजीवलोकप्रत्युद्धरणगुरूपकारी महानुभावो मारुतिः ।

न्तराले मया संदृष्टाः । निरन्तरं दृष्टा इत्यर्थः । तथा कुवलयिन इत्यत्र प्रशंसायां मतुपा प्रशस्तकुवलययुक्ता इत्यर्थलाभेन रात्रौ दृष्टा इति सूच्यते । केचित्तु—मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डपुण्डरीका विभागा बाष्पाम्भःपरिपतनोद्गमान्तराले कुवलयिनो दृष्टा इत्यन्वयमुक्त्वा बाष्पाम्भःप्रसरणमालिनीकृतपुण्डरीकाः कुवलयवन्तो दृष्टा इत्यर्थमाहुः । परे तु—मदकलमल्लिकाक्षपक्षव्याधूतस्फुरदुरुदण्डपुण्डरीकाः कुवलयिनश्च विभागाः । विभज्यन्त इति विभागाः । परस्परसंकीर्णप्रदेशा बाष्पाम्भःपरिपतनोद्गमान्तराले संदृष्टा एकीकृत्य दृष्टाः । समित्येकीकारे । अविभागेन दृष्टा इत्याहुः । इतरे तु—'ननु रमणीयमेतत्पद्मसरः' इत्युक्तं त्वया तत्कथमुपपद्यते, विरहोद्दीपककलकूजितयुक्तहंसाधिष्ठितपुण्डरीकयुक्तस्य सरसो द्रष्टुमशक्यत्वादित्यत्राह—एतस्मिन्मदकलेति । मत् अकलेति पदच्छेदः । मदिति पञ्चम्येकवचनम् । पृथक्पदं समस्तं वा । मन्मन्निमित्तं विरहव्यथातुरमद्धेतोर्न विद्यते कलं कूजितं येषां ते तेषां मल्लिकाक्षाणां हंसविशेषाणां पक्षैर्व्याधूतानि कम्पितानीति यावत् । अत एव स्फुरदुरुदण्डानि निवृत्ताधारतया चलदुरुदण्डानि पुण्डरीकाणि येषु तथोक्ताः कुवलयिनः पुण्डरीकवद्दिवा विकासाद्यभावेनाकिंचित्करत्वाद्धंसैरव्याधूततया कुवलयसत्तामात्रवन्तः । एतस्मिन्विभागा बाष्पाम्भःपरिपतनोद्गमान्तराले संदृष्टाः सम्यग्दृष्टाः । परिहाससंभावितत्वादवस्थितिव्यतिरेकनिश्चयपर्यन्तं दृष्टा इत्यर्थः । निवृत्तोपप्लवतया सम्यग्दृष्टा इति भावः । मल्लिकाक्षाः खलु विरहोद्विग्नस्य मम कृते स्वयं विरहसमुद्दीपकं कूजितं त्यक्त्वा तदुद्दीपकानि पुण्डरीकाण्यप्यनाशयन् । ततोऽहं निवृत्तोपप्लवतया नान्तरीयकतयावस्थितिपर्यन्तं तान्विहंगान् दृष्टवानिति भावः । युक्तं चैतत् । विरहखिन्नं रामं प्रति मल्लिकाक्षाणाम् 'अपि ग्रावा रोदिति' इति न्यायेन करुणायाः संभवात् । दत्तचक्रवाकशापदर्शनेन चक्रवाकशापदाता रामोऽस्माकमपि शापं दास्यतीति भीत्या शब्दासंभवात् । 'कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतम्' इत्यादिविषयविशेषैस्तिरश्चामपि विरहिजनानुरोधः प्रसिद्धश्चेति वदन्ति ॥ ३१ ॥ **एष इति** । चिरान्निर्व्यूढं निष्पादितं यज्जीव-

१ 'भुवो वि°' इति पा० ।

रामः—

दिष्ट्या सोऽयं महाबाहुरञ्जनानन्दवर्धनः ।
यस्य वीर्येण कृतिनो वयं च भुवनानि च ॥ ३२ ॥

**सीता**—वच्छ,* एसो सो कुसुमिदकअंबतरुतांडविअबंहिणो किंणामहेओ गिरी ?। जत्थ अणुभावसोहग्गमेत्तपरिसेससुंदरसिरी मुच्छंदो तुए परुण्णेण ओसंबिओ तरुअले अज्जउत्तो आलिहिदो ।

लक्ष्मणः—

सोऽयं शैलः ककुभसुरभिर्माल्यवान्नाम यस्मि-
न्नीलः स्निग्धः श्रयति शिखरं नूतनस्तोयवाहः ।
आर्येणास्मिन्

रामः—

विरम विरमातःपरं न क्षमोऽस्मि
प्रत्यावृत्तः स पुनरिव मे जानकीविप्रयोगः ॥ ३३ ॥

**लक्ष्मणः**—अतःपरमार्यस्य तत्रभवतां कपिराक्षसानां चापरिसंख्या-

---

* वत्स, एष स कुसुमितकदम्बकतरुताण्डवितबर्हिणः किंनामधेयो गिरिः ?। यत्रानुभावसौभाग्यमात्रपरिशेषसुन्दरश्रीर्मूर्च्छंस्त्वया प्ररुदितेनावलम्बितस्तरुतल आर्यपुत्र आलिखितः ।

---

लोकप्रत्युद्धरणं तेन गुरु यथा भवति तथा। उपकरोतीत्युपकारी दशमासपरिमितरावण-गृहवासस्यातिभूयस्त्वाभिसंधिना चिरादित्युक्तम्। स्वसत्तयैव जीवलोकमग्नतासंभावनया स्वोद्धरणेन तदुद्धरणसंभावनया च जीवलोकप्रत्युद्धरणमित्युक्तम् ॥ **दिष्ट्येति** । दिष्ट्येत्यानन्दे । **यस्य वीर्येणेत्यादि** । वयम् लक्ष्मणभरतशत्रुघ्नसीताविभीषण-सुग्रीववानराः अहं चेत्यर्थः । कृतिनः सुकृतिनः । यद्वा कृतमुपकारस्तद्वन्तः । उपकृत इत्यर्थः । अन्योन्यवृत्तान्तकथनेन सीतारामयोः, स्वानवधानप्रयुक्तसीताविरहपरिहारेण लक्ष्मणस्य, वह्निप्रवेशपरिहारेण भरतशत्रुघ्नयोः शरणागतस्वपरिग्रहसिद्धान्तेन विभीष-णस्य, सुखोत्पादनेन सुग्रीवस्य, मधुवनभङ्गापराधवारणेन वानराणाम्, स्वसंजीवनादिना भुवनानां च कृतित्वमिति यथायथमूहनीयम् ॥ ३२ ॥ अनुभावः प्रभावः । सौभाग्यं सौन्दर्यम् । प्ररुदितेन रोदनकर्त्रा । 'आदिकर्मणि क्तः' (३।४।७१)। रोदनप्रारम्भ एव । अवलम्बितः पतन् यथा धारित इति ॥ **शैलः(सोऽयं) इति** । ककुभा वृक्षविशेषा-स्तेषां पुष्पैः सुरभिः । 'पुष्पमूलेषु बहुलम्' इति लुप् । विप्रयोगः वियोगः । प्रत्यावृत्तः पुनरागतः ॥ ३३ ॥ अपरिसंख्यानीति परिसंख्यानिषेधः । अवधिरिति यावत् । तद्रहितानि

---

१ 'धूसर°' इति पा० ।

न्युत्तरोत्तराणि कर्माश्चर्याणि। परिश्रान्ता चेयमार्या। तद्विज्ञापयामि विश्राम्यतामिति।

**सीता**—अज्जउत्त,* एदिणा चित्तदंसणेण पच्चुप्पण्णदोहलाए मए विण्णावणिज्जं अत्थि।

**रामः**—नन्वाज्ञापय।

**सीता**—जाणे† पुणो वि पसण्णगंभीरासु वणराईसु विहरिअ पवित्तणिम्मलसिसिरसलिलं भअवदिं भाईरहिं ओगाहिस्सं ति।

**रामः**—वत्स लक्ष्मण।

**लक्ष्मणः**—एषोऽस्मि।

**रामः**—वत्स, अचिरादेव[1] संपादनीयो दौर्हृद इति संप्रत्येव गुरुभिः संदिष्टम्। तदस्खलितसंपातं रथमुपस्थापय।

**सीता**—‡अज्जउत्त, तुम्हेहिं वि आअंदव्वं।

**रामः**—अतिकठिनहृदये, एतदपि वक्तव्यम्?।

**सीता**—तेण§ हि पिअं मे पिअं मे।

**लक्ष्मणः**—यदाज्ञापयत्यार्यः। (इति निष्क्रान्तः।)

**रामः**—प्रिये,[2] वातायनोपकण्ठे संविष्टा भव।

**सीता**—एव्वं¶ होदु। ओहरिदम्हि खु परिस्समणिद्दाए[3]।

**रामः**—तेन हि निरन्तरमवलम्बस्व मामनुगमनाय।

जीवयन्निव ससाध्वसश्रमस्वेदबिन्दुरधिकण्ठमर्प्यताम्।
बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः॥ ३४॥

---

* आर्यपुत्र, एतेन चित्रदर्शनेन प्रत्युत्पन्नदोहदाया मम विज्ञापनीयमस्ति।

† जाने पुनरपि प्रसन्नगम्भीरासु वनराजिषु विहृत्य पवित्रनिर्मलशिशिरसलिलां भगवतीं भागीरथीं अवगाहिष्ये इति।

‡ आर्यपुत्र, युष्माभिरप्यागन्तव्यम्।

§ तेन हि प्रियं मे प्रियं मे।

¶ एवं भवतु। अपहृतास्मि खलु परिश्रमनिद्रया।

---

संख्याशून्यानीति वा॥ प्रत्युत्पन्नदोहदायाः उत्पन्नाभिलाषाया इत्यर्थः। उत्पन्नमनोविकाराया इति वा॥ **वत्स, अचिरादित्यादि**। एष गूढप्रकाशनादुद्भेदः॥ **जीवय-**

---

१ 'अचिरं' इति पा०। २ 'अत्र...संविष्टौ भवावः' इति पा०। ३ '०मजणिदाए निद्दाए' इति पा०।

(तथा कारयन् सानन्दम् ।) प्रिये, किमेतत् ? ।

विनिश्चेतुं शक्यो न सुखमिति वा दुःखमिति वा
प्रमोहो निद्रा वा किमु विषविसर्पः किमु मदः ।
तव स्पर्शे स्पर्शे मम हि परिमूढेन्द्रियगणो
विकारश्चैतन्यं भ्रमयति च [1]संमीलयति च ॥ ३५ ॥

सीता—धीरप्पसादा* तुम्हेत्ति एत्थ दाणिं अच्चरिअं ।

* धीरप्रसादा यूयमित्यत्रेदानीमाश्चर्यम् ।

न्निति । साध्वसं भयम् । अधिकण्ठम् । कण्ठ इत्यर्थः । इन्दोरिमे ऐन्दवाः । चन्द्रमणिः चन्द्रकान्तशिला । जीवयन्नर्पयतामिवेत्यन्वयः । इवशब्द ईषदर्थकः । जीवयन्निति च 'लक्षणहेत्वोः' (३।२।१२६) इति शतृ । तथा च मत्संजीवनफलकं यदीषदर्पणं तत्कर्म क्रियतामित्यर्थः । अथवा एतद्विरहे 'न जीवेयं क्षणमपि' इत्युक्तम् । अत्र ऐन्दवेत्यादिना सादृश्यमुक्त्वा जीवयन्निति विशेषस्योक्तेर्व्यतिरेकालंकारः । 'व्यतिरेको विशेषश्चेदुपमानोपमेययोः' इति ॥ ३४ ॥ **तथा कारयन्निति** । 'सहजलज्जाजडदृशः' इति वक्ष्यमाणरीत्या लज्जयाविष्टायां तस्यां स्वयं तथा कारयन्नित्यर्थः । पूर्वोक्तश्रमवशाच्च स्वयमेव तथा कारयतीत्युक्तम् ॥ **विनिश्चेतुमिति** । अत्रत्यसुखदुःखशब्दौ प्रियाप्रियमित्रशत्रुसंश्लेषादिजन्यमानससुखदुःखपरौ शारीरसुखदुःखमदविषविसर्पयोः पृथग्ग्रहणात् । सुखदुःखयोः शारीरमानसत्वविभागस्तु 'कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्' इति सूत्रतद्व्याख्यानयोः स्पष्टः । अत्र सीते इति संबुद्ध्यन्तमध्याहार्यम् । तवेत्युक्तेः । हे सीते, तव स्पर्शे स्पर्शे त्वदीययावत्स्पर्शेषु परिमूढः स्वस्वविषयग्रहणासमर्थ इन्द्रियगणश्चक्षुरादीन्द्रियसमूहः येन स तथोक्तो मम विकार आन्तरावस्थाविशेषः । चैतन्यमन्तःकरणावच्छिन्नचैतन्यम् । जीवचैतन्यमिति यावत् । अद्वैतमतप्रक्रिययेदमुक्तम् । मदन्तरात्मानमिति फलितोऽर्थः । भ्रमयति प्रतिकूलतया भासमानः सन् क्षुब्धं करोति । संमीलयति च अनुकूलतया भासमानः सन् उल्लासयति च । अयमित्यध्याहार्यम् । अयं विकारः सुखमिति विनिश्चेतुं न शक्यः । दुःखमिति वा विनिश्चेतुं न शक्यः । प्रमोहो वा प्रकृष्टमूर्च्छात्वेन संशयितुं योग्यो निद्रा वा सुषुप्तित्वेन संशयितुं योग्यो विषविसर्पः किमु । विषेण विसृप्यत इति विग्रहः । कर्मणि घञ् । विषप्रसरणजन्यत्वेन संशयितुं योग्य इत्यर्थः । मदः किमु । मदत्वेन संशयितुं योग्य इत्यर्थः । अस्य विकारस्य स्पर्शजन्यत्वात्परिमूढेन्द्रियगणत्वादन्तरात्मक्षोभकरत्वाच्च तथाविधशात्रवादिस्पर्शजन्यमानसदुःखत्वेन संशययोग्यत्वम् । एवं स्पर्शजन्यत्वात्परिमूढेन्द्रियगणत्वादन्तरात्मोल्लासकारित्वाच्च तथाविधमित्रादिस्पर्शजन्यमानससुखत्वेन संशयार्हत्वं भवति च मित्रादिस्पर्शजन्यसुखं परिमूढेन्द्रियगणम् । 'नीवीं प्रति प्रणिहिते तु करे प्रियेण सख्यः शपामि यदि किंचिदपि स्मरामि' इत्युक्तेः । एवं स्पर्शजन्यत्वात्परिमूढेन्द्रियगणत्वादन्तरात्मक्षोभकरत्वाच्चास्य दण्डाद्यभिघातजन्यपरिमूढेन्द्रियगणत्वान्तरात्मक्षोभकरत्वविशिष्टसूक्ष्म-

१ 'समुन्मीलयति च' इति पा० ।

**रामः**—

म्लानस्य जीवकुसुमस्य विकासनानि
संतर्पणानि सकलेन्द्रियमोहनानि ।
एतानि ते[1] सुवचनानि सरोरुहाक्षि
कर्णामृतानि मनसश्च रसायनानि ॥ ३६ ॥

**सीता**—पिअंवद,* एहि । [2]संविसम्ह ।

* प्रियंवद, एहि । संविशावः ।

प्राणसंचाररूपमूर्च्छात्वेन संभवनार्हत्वम् । एवमस्य विकारस्य स्पर्शजन्यत्वात्परिमूढेन्द्रियगणत्वादन्तरात्मानुकूलत्वाच्च मृदुतरतल्पादिस्पर्शजन्यत्वनिवृत्तेन्द्रियव्यापारत्वपरमात्मसुपरिष्वङ्गप्रयुक्तसुखरूपत्वविशिष्टनिद्रात्वेन संशयार्हत्वम् । एवमस्य स्पर्शजन्यत्वात्परिमूढेन्द्रियगणत्वादन्तरात्मप्रतिकूलत्वाच्च तथाविधविषस्पर्शजन्यविकारत्वेन संशयार्हत्वम् । एवमस्य स्पर्शजन्यत्वात्परिमूढेन्द्रियगणत्वादन्तरात्मानुकूलत्वात्तथाविधमदत्वेन संशययोग्यत्वम् । मदस्य क्षीरसुराद्याप्यायकवस्त्वायत्तत्वात्स्पर्शजन्यत्वं परिमूढेन्द्रियगणत्वमन्तरात्मानुकूलत्वं च । तदुक्तम्—'मदिरादिकृतो मोहहर्षव्यतिकरो मदः' इति । सर्वमिदं सीताया भोग्यताप्रकर्षे तात्पर्यमाविष्करोति । हिशब्दः प्रसिद्धौ । तथा च मदीयोऽयं विकारस्त्वयापि ज्ञायत इति व्यज्यते ॥ ३५ ॥ **म्लानस्येति** । म्लानस्य हर्षक्षयवतो जीवकुसुमस्य जीव एव कुसुमं तस्य विकासनानि विकासजनकानि हर्षोत्पादकानि संतर्पणानि तृप्तिजनकानि भोग्यान्तरापेक्षानुत्पादकानि अत एव सकलानामिन्द्रियाणां मोहनानि स्वव्यापारनिरोधीनि कर्णयोरमृतानि । यथा 'अमृतस्य दृष्ट्वा तृप्यन्ति' इति दर्शनमात्रेण तृप्तिजनकत्वम्, तद्वद्वेषामर्थपर्यालोचनं विनापि रमणीयत्वमिति भावः । मनसश्च रसायनानि । रसायनं नामानेकरसवस्तुसमुदायात्मकरसवस्तुविशेषो बाहटे प्रसिद्धः । बहुवचनेन अनेकरसायनसदृशानीति व्यज्यते । किंचानेकरसायनवस्त्वास्वादनेन सर्वेषां रसानां तत्रोपलम्भः, एवं शब्दान्तरश्रवणजन्यसुखानामेतद्वचनैर्लाभ इति व्यज्यते। अपि च यथा रसायनस्य रसमयत्वाद्भोग्यत्वम्, औषधात्मकत्वाद्रोगनिवर्तकत्वं च एवमेतेषामपि प्रियत्वं हितत्वं चेति व्यञ्जयितुं रसायनत्वोक्तिः । सरोरुहाक्षि, आयामत्वविपुलत्वाभ्यां सादृश्यमभिप्रेतम् । एवं च स्वस्या अपि स्ववचनवैलक्षण्यप्रयुक्तविस्मयातिशयाच्चक्षुषोरायतत्वविपुलत्वद्विगुणीभाव इति भावः । ते सुवचनानि स्वकीयवचनवैलक्षण्यातिशयतः सीतायाः स्ववचनेषु स्वीयतासंशयः स्यादिति ते इत्युक्तिः । सुशब्देन सीतावचनेष्वपि एतादृशं सौभाग्यं नानुभूतपूर्वमिति व्यज्यते । 'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः' इति न्यायेन न दोषः ॥ ३६ ॥ प्रियंवद प्रियवादिन् । 'प्रियवशे वदः खच्' (३।२।३८) । संविशावः । 'स्वप्नः संवेश इत्यपि' इत्यमरः ॥ अपि संदेष्टव्यम् ।

१ 'तानि वचनानि सरोरुहाक्ष्याः' इति पा० । २ 'सइस्सं' इति पा० ।

**रामः**—अपि संदेष्टव्यम् ।

आ विवाहसमयाद्गृहे वने
शैशवे तदनु यौवने पुनः ।
स्वापहेतुरनुपाश्रितोऽन्यया
रामबाहुरुपधानमेष ते ॥ ३७ ॥

**सीता**—(निद्रां नाटयन्ती ।) *अत्थि एदं । अज्जउत्त, अत्थि एदं । (इति स्वपिति ।)

**रामः**—कथं प्रियवचनैव मे वक्षसि प्रसुप्ता ? । (निर्वर्ण्य ।)

इयं गेहे लक्ष्मीरियममृतवर्तिर्नयनयो-
रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।
अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः
किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ ३८ ॥

(प्रविश्य ।)

**प्रतीहारी**—देव,† उवट्ठिदो ।

**रामः**—अयि, कः ? ।

**प्रतीहारी**—आसण्णपरिआरओ‡ देवस्स दुम्मुहो ।

---

* अस्त्येतत् । आर्यपुत्र, अस्त्येतत् ।

† देव, उपस्थितः ।

‡ आसन्नपरिचारको देवस्य दुर्मुखः ।

---

संदेश उक्तिः । भ्रुकुटीभङ्गेन सूचयितव्ये किमर्थमुक्तिप्रयास इति भावः । यद्वा यथा शयनदशायामुपधानादीनामुपकरणत्वं तद्वन्ममापीति विधिर्वा किमर्थ इति भावः ॥ उपकरणत्वमेवाह—**आ विवाहेति** । आ विवाहसमयात् विवाहसमयादारभ्येत्यर्थः । गृहे शैशवे यौवने च स्वापहेतुः । वने पुनर्यौवने स्वापहेतुरित्यन्वयः । न तु यथासंख्यम् । अन्यया अनुपाश्रितः स्वापहेतुतयाऽनुपाश्रित इत्यर्थः । अतः 'जुष्टं परमनारीणां भुजैः परमसुन्दरैः' इत्यनेन न विरोधः । चेटीविधया संवाहने तात्पर्यात् 'न रामः परदारान्वै चक्षुर्भ्यामपि पश्यति' इत्युक्तेः । मद्बाहुरुपधानमित्यनुक्त्वा रामबाहुरित्युक्तिः प्रसिद्धिद्योतनार्था । 'उपधाय भुजं तस्य' इत्यादिवचनात् ॥ ३७ ॥ **इयमिति** । इयं गेहे लक्ष्मीः लक्ष्मीसदृशी । इयममृतवर्तिर्नयनयोः । तथा नयनानन्दकरीत्यर्थः । किमेतत्पर्यन्तानुधावनवचनेन ? । एतदीयमेव यत्किंचिन्मम पर्याप्तमित्याह—**असावस्या इति** । वपुषि प्रसिद्धचन्दनव्यावृत्तिः । अस्याः किं न प्रेयः ? एतत्संबन्धि किं न प्रियम् ? सर्वमपि प्रियमेवेत्यर्थः । अत्र सीतापेक्षया तत्संबन्ध्येव प्रियमिति

---

१ 'अयि' इति पा० । २ 'प्रसुप्तैव' इति पा० ।

**रामः**—(स्वगतम् ।) शुद्धान्तचारी दुर्मुखः, स मया पौरजानपदेष्वपसर्पः प्रहितः । (प्रकाशम् ।) आगच्छतु ।

(प्रतीहारी निष्क्रान्ता ।)

(प्रविश्य ।)

**दुर्मुखः**—(स्वगतम् ।) *हा! कहं दाणिं देवीं अंतरेण ईरिसं अचिंतणिज्जं जणाववादं देवस्स कहइस्सं? । अहवा णिओओ खु मह मंदभाअहेअस्स एसो! ।

**सीता**—(उत्स्वप्रायते ।) †अज्जउत्त, कहिं सि? ।

**रामः**—[1]सेयमेव रणरणकदायिनी चित्रदर्शनाद्विरहभावना देव्याः [2]स्वप्नोद्योगं करोति । (सस्नेहमङ्गमस्याः परामृशन् ।)

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु य-
द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।

* हा! कथमिदानीं देवीमन्तरेणेदृशमचिन्तनीयं जनापवादं देवस्य कथयिष्यामि? । अथवा नियोगः खलु मम मन्दभागधेयस्यैषः! ।

† आर्यपुत्र, कुत्रासि? ।

रामचन्द्रमतमिति कवेराशयोऽवगम्यते । उपसंहारे किमस्या न प्रेय इत्युक्तत्वात् । इतरथा कथमेषेत्येव न वदेत् । भर्तृमीढश्च—'मनसिजरुजः सा वा दिव्या ममालमपोहितुं रहसि लघयेदारब्धा वा तदाश्रयिणी कथा' इत्याह । अत्र रामबाहुरुपधानमिति सीतां प्रति स्वबाहोरुपधानत्वमुक्त्वा 'अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकसरः' इत्युक्तं रामेण । तदिदं वैलक्षण्यातिशयकार्यम् । अत्र 'इयं गेहे लक्ष्मीः' इत्यादिभिरेकस्या एव सीताया गृहविषये दीपकलिकाकार्यकारित्वं चक्षुर्विषये ज्योत्स्नादिकार्यकारित्वं कण्ठे हारकार्यकारित्वं च व्यज्यते । रूपकमुल्लेखो वा अलंकारः ॥३८॥ आसन्नपरिचारको दुर्मुखस्तन्नामा ॥ अपसर्पो गूढचरः । प्रहितः प्रयुक्तः । न तु वास्तव इत्यर्थः ॥ रणरणकदायिनी विक्षोभकारिणी । विरहभावना वियोगध्यानम् । चित्रदर्शनादिति स्मरणहेतुरुक्तः । स्वप्ने निद्रायामुद्योगं वचनादिप्रयत्नम् । 'उद्वेगम्' इति पाठे भयसंभ्रममित्यर्थः । अङ्गमस्याः परामृशन् । एतेनोपरितनश्लोकस्यापत्यविषयत्वकल्पना परास्ता, तथा सति उदरमस्याः परामृशन्निति वक्तव्यतापत्तेः । न च 'मयैवादौ ज्ञातः करतलपरामर्शकलया द्विधा गर्भग्रन्थिः' इति वक्ष्यमाणानुवादस्य पुरोवादसापेक्षतया अत्रत्याङ्गशब्दस्य तद्विशालोदरपरत्वं कवेः संमतमिति वाच्यम् । तत्र सहजलज्जाजडदृशः' इति जागरप्रतीतेः, अत्र च सुषुप्तिप्रतीतेस्तदयोगादिति ध्येयम् । **अद्वैतमिति ।** यत्सर्वास्ववस्थासु सुखदुःखयोरद्वैतमनुगतम् । जाग्रत्स्वप्नसुषुप्त्यादिसर्वावस्थासु ये सुख-

१ 'अये' इत्यधिकं क्वचित् । २ 'स्वप्नोद्वेगं' इति पा० ।

कालेनावरणात्ययात्परिणते यत्प्रेमसारे[1] स्थितं
भद्रं तस्य सुमानुषस्य कथमप्येकं[2] हि तत्प्राप्यते ॥ ३९ ॥

**दुर्मुखः**—(उपसृत्य।) *जेदु देवो !।

**रामः**—ब्रूहि यदुपलब्धम्।

**दुर्मुखः**—†उवत्थुवंति देवं पौरजाणपदा जहा विसुमराविदा अम्हे महाराअं दसरहं रामदेवेणेत्ति।

**रामः**—अर्थवाद एवैषः। दोषं तु मे कथंचित्[3] कथय येन स प्रतिविधीयते।

---

* जयतु देवः !।

† उपस्तुवन्ति देवं पौरजानपदा यथा विस्मारिता वयं महाराजं दशरथं रामदेवेनेति।

---

दुःखे तयोः संबन्धि यदद्वैतमभिन्नत्वं तदनुगतम्। तद्विशिष्टमित्यर्थः। सर्वास्ववस्थास्वभिन्नसुखदुःखापादकमित्यर्थः। द्वयोर्भावो द्वैतम्। इदमेवाद्वैतं चक्रवाकमिथुनवर्णनव्यपदेशेन नवेन कविना व्याख्यातम्—'भुक्तं तद्विमृणालयोर्मिथुनयोः पीतं द्विराजीवयोः सुप्तं तद्विफलाशयोरविरलं संश्लिष्टयोर्यद्यपि। पर्यायात्समयद्वयेन विरुतं भिन्नप्रयत्नेन वा मूर्तिद्वैतवशान्मतिर्मिथुनमित्यद्वैतमेवानयोः॥' इति। पर्यायादिति पर्यायशब्दमन्तर्भाव्यं न विरुद्धमिति ल्यब्लोपे पञ्चमी व्याख्येया। नातः समयद्वय इत्यनेन पौनरुक्त्यम्। यत्र दाम्पत्ये हृदयस्य गुरुकुलशिष्टमनस इत्यर्थः। विश्रामः श्रमापनयनकरसुखविशेषानुभवः। अत्र 'विश्राम इत्यपाणिनीयम्, नोदात्तेति वृद्धिप्रतिषेधात्' इति वैयाकरणाः। श्रीहर्षस्तु 'विश्रामो विश्रमश्च' इति द्विरूपकोश उक्तवान्। यस्मिन्दाम्पत्ये रसः स्पृहारूपो जरसा जरया अहार्यो हर्तुमशक्यः। यद्वा यस्मिन्सति रस आह्लादो जरसाप्यहार्यः। आवरणात्ययात्। पदद्वयमिदम्। वरणं विवाहः, अत्ययः शरीरसंपातः, वरणं चात्ययश्चेति समाहारद्वन्द्वः। आवरणात्ययात्। वरणात्ययमभिव्याप्येत्यर्थः। वरणमारभ्य शरीरपातपर्यन्तं वर्तमानेन कालेन परिणते उपचयं प्राप्ते प्रेमसारे उत्कृष्टप्रेम्णि स्थितं स्थितिमत्। 'मालत्याः प्रथमावलोकदिवसादारभ्य विस्तारिभिर्भूयः स्नेहविचेष्टितैर्मृगदृशो नीतस्य कोटिं पराम्'। 'परां कोटिं स्नेहो परिचयविकासादधिगते' इत्यादि समानार्थकं। 'कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितम्' [illegible]क्यं वेदितव्यम्। केचित्तु आवरणात्ययात्प्रतिबन्धकनिवृत्तेरिति व्याचक्षते। प्रेम्ण उत्कृष्टत्वं च परकीयावेश्योपपत्त्याद्यविषयत्वम्। तस्य सुमानुषस्य दाम्पत्यस्य। 'सुमानुषं तु दाम्पत्यम्' इत्यभिधानादिति प्राञ्च आहुः। अत एवैतद्विकृतिभूतदाम्पत्यार्थकमनिच्छितिशब्दस्य द्रविडभाषाप्रसिद्धिरपि। अन्ये तु 'प्रकरणानुगुण्याद्विशेषणस्वारस्यात्तच्छब्देन दाम्पत्ये लब्धे सुमानुषस्येति तद्विशेषणतया योजनीयम्।

---

१ 'यत्स्नेहसारे' इति पा०। २ 'प्रेम' इति पा०। ३ 'कञ्चित्' इति पा०।

**दुर्मुखः**—(सास्रम् ।) *सुणादु महाराओ । (कर्णे ।) एव्वं विअ ।

**रामः**—अहह, अतितीव्रोऽयं[1] वाग्वज्रः । (इति मूर्च्छति ।)

**दुर्मुखः**—†आस्ससदु देवो ।

**रामः**—(आश्वस्य ।)

हा हा धिक्परगृहवासदूषणं य-
द्वैदेह्याः प्रशमितमद्भुतैरुपायैः ।
एतत्पुनरपि दैवदुर्विपाका-
दालर्कं विषमिव सर्वतः प्रसक्तम्[2] ॥ ४० ॥

तत्किमद्य मन्दभाग्यः करोमि ? । (विमृश्य । सकरुणम् ।) अथवा किमेतत् ? ।

सतां केनापि कार्येण लोकस्याराधनं परम् ।
तत्प्रतीतं[3] हि तातेन मां च प्राणांश्च मुञ्चता ॥ ४१ ॥

संप्रत्येव च भगवता वसिष्ठेन संदिष्टम् । अपि च ।

---

* शृणोतु महाराजः । एवमिव ।
† आश्वसितु देवः ।

---

'शोभनो मानुषो येन' इत्याहुः । केचित्तु 'सुमानुषस्य सौजन्यस्य' इत्याहुः । कथमपि सर्वप्रकारेणापि तत्प्रसिद्धमेकं मुख्यं भद्रं क्षेमं प्रार्थ्यते प्रकर्षेण याच्यते । अभिलष्यते वा । हि यस्मात् सुमानुषस्य भद्रमेकं प्रार्थ्यते तस्मात् सैव रणरणकदायिनीत्यादिपूर्वेणान्वयः । अनर्थशङ्कीनि बन्धुमित्रहृदयानीति न्यायेनेति भावः । प्रेमसारे स्थितमित्यनेन मधुकटाहनिक्षिप्तरसालफलसादृश्यं व्यज्यते । अत्र फलविषयकौत्सुक्यप्रतिपादनादारम्भ उक्तः । तदुक्तम्—'औत्सुक्यमात्रमारम्भः फललाभाय भूयसे' इति ॥ ३९ ॥ कर्णे **एवमिवेति** । 'अर्थस्त्वेकेन विज्ञेयः पश्चाज्ज्ञात्वा प्रसङ्गतः । कर्णे एवमिवेत्युक्त्वा काव्यबन्धे प्रयुज्यते ॥' इत्युक्तत्वात् ॥ **हा हेति** । परगृहवास एव दूषणम् । नान्यदिति भावः । आलर्कं श्वसंबन्धि प्रसक्तम् । पाठान्तरे 'प्रसृप्तम्' इति वा । एकत्र स्पर्शः कालान्तरेण सर्वतः प्रसरणमिति भावः ॥ ४० ॥ मन्दभाग्योऽल्पभाग्यः । **सतामिति** । केनापि कार्येण । 'स्नेहं दयां च सौख्यं च यदि वा जानकीमपि' इत्युक्तरीत्या लोकस्याराधनं लोकस्य प्रीतिजनकव्यापारः । सतां धर्मशास्त्रस्मृत्यादीनां परं धर्मः श्रेष्ठत्वेनाभिमतः । तथा **चापस्तम्बः**—'यं त्वार्याः [illegible]माणं प्रशंसन्ति स धर्मः' इति । न चेदमननुष्ठानपराहतमित्याह—**तत्प्रतीतमिति** । 'अवश्यं पितुराचारः' इति स्फोरणार्थमिदम् । मां च मुख्यतममत्परित्यागानुषङ्गिकः तातस्य स्वप्राणत्याग इत्याह—**प्राणांश्चेति** । मुञ्चतेति हेतौ शतृ । प्राणत्यागहेतुकं पूरणमित्यर्थः ॥ ४१ ॥ **संप्रत्येव···संदिष्टमिति** । 'युक्तः प्रजानामनुरञ्जने-

---

[1] 'तीव्रसंवेगो' इति पा० । [2] 'प्रसृप्तम्' इति पा० । [3] 'यत्पूरितं' इति पा० ।

यत्सावित्रैर्दीपितं भूमिपालै-
र्लोकश्रेष्ठैः साधु चित्रं चरित्रम् ।
मत्संबन्धात्कश्मला किंवदन्ती
स्याच्चेदस्मिन्हन्त धिङ्मामधन्यम् ॥ ४२ ॥

हा देवि देवयजनसंभवे, हा स्वजन्मानुग्रहपवित्रितवसुंधरे, हा मुनिजनकनन्दिनि, हा पावकवसिष्ठारुन्धतीप्रशस्तशीलशालिनि, हा राममयजीविते, हा महारण्यवासप्रियसखि, हा तातप्रिये, हा स्तोकवादिनि! कथमेवंविधायास्तवायमीदृशः परिणामः ? ।

त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः ।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे ॥ ४३ ॥

ऽस्याः' इति संदिष्टमिति भावः । **यदिति** । सावित्रैः सवितुः पुत्रैः । 'तस्यापत्यम्' (४।१।९२) इत्यण्प्रत्ययः । अनेनाभिजन उक्तः । भूमिपालैरित्यनेन क्षत्रधर्मभूतभूमिपालनात्मकवृत्तमुक्तम् । परिशेषाल्लोकश्रेष्ठैरित्यनेन विद्योक्ता । एवमभिजनविद्यावृत्तैः सर्वाभ्यर्हमनुप्रभृतिराजभिर्दीपितं प्रकाशितं स्वयमनुष्ठितमनुष्ठापितं च चित्रमाश्चर्यभूतम् । कश्मला हेया । किंवदन्ती लोकवादः ॥ ४२ ॥ स्वतो निर्दोषेत्याह—**हा देवि !** । उत्पत्तिवंशदोषोऽपि नास्तीत्याह—**देवयजनसंभवे** । स्वोत्पत्तिभूमेरपि शुद्धिजननीत्याह—**स्वजन्मेति** । संपर्कवशदोषोऽपि नास्तीत्याह—**मुनिजनकेति** । नन्दिनीत्यनेन औरसकन्यापेक्षयाभिमतेति व्यज्यते । गुरुदेवताभिमतेत्याह—**पावकवसिष्ठेति** । शीलेन वृत्तेन शाड्यते श्लाघ्यत इति शीलशालिनी । 'शाडृ श्लाघायाम्' इत्यस्माद्बाहुलकात्कर्मणि णिनिः । डलयोरेकत्वम् । तद्विवृणोति—**राममयेति** । अनेन रावणस्मरणमपि दूरोत्सारितमिति व्यज्यते । रामस्य रावणस्मरणगन्धासहत्वाच्च त्विदमनुमेयम् । किं त्वनुष्ठानेन प्रकटितमित्याह—**महारण्येति** प्रियत्वविशेषणम् । अनेन निर्बन्धलोकवादादिव्यावृत्तिः । सखीत्यनेन दण्डकारण्यगमने पत्नीत्वप्रयुक्तप्राधान्यं नाङ्गीकृतम् । किं तु पुरुषसिंहरामसमप्रधानत्वमेवेति । 'समानं ख्यायत इति सखा' इति व्युत्पत्तेरुपलक्षणमिदं रामापेक्षया प्राधान्यस्यापि । अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान्' इत्युक्तत्वात् । तातस्य प्रिये अभिमते । 'वधूचतुष्केऽपि' इत्यादिवक्ष्यमाणरीत्येति भावः । स्तोकं मितं वदन्तीत्यर्थः । 'सत्याय मितभाषिणाम्' इत्युक्तरीत्या निमित्तलेशाभावेऽपि कथमयं परिणाम इति भावः । **त्वयेति** । त्वया जगन्ति पुण्यानि पुण्यवन्ति । मत्वर्थीयाच्प्रत्ययः । 'पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम । कार्यं करुणमार्येण न कश्चिन्नापराध्यति ॥' इति त्वन्मतानुसारेण पापपुण्ययोरनुग्रहतौल्यादिति भावः । जनानामुपजीव्यविरोध इत्याह—त्वय्यपुण्या जनोक्तयः । अत्र त्वया जगन्ति पुण्यानीति भुवनानां पुण्य-

१ 'शुद्धं' इति पा० । २ 'निमि०' इति पा० ।

(दुर्मुखं प्रति ।) दुर्मुख, ब्रूहि लक्ष्मणम् । एष नूतनो राजा रामः समाज्ञापयति । (कर्णे ।) एवमेवम् । इति ।

**दुर्मुखः**—*हा ! कहं अग्गिपरिसुद्धाए गब्भट्ठिदपवित्तसंताणाए देवीए दुज्जणवअणादो एदं ववसिदं देवेण ? ।

**रामः**—शान्तं पापम्, शान्तं पापम् ! । दुर्जना नाम पौरजानपदाः ! ।

इक्ष्वाकुवंशोऽभिमतः प्रजानां
जातं च दैवाद्वचनीयबीजम् ।
यच्चाद्भुतं कर्म विशुद्धिकाले
प्रत्येतु कस्तद्यदि दूरवृत्तम् ॥ ४४ ॥

तद्गच्छ ।

* हा ! कथमग्निपरिशुद्धाया गर्भस्थितपवित्रसंतानाया देव्या दुर्जनवचनादिदं व्यवसितं देवेन ? ।

त्वमुक्त्वा जनोक्तय इति जनशब्दोपादानान्नैवं लोकान्तरस्थानामुपजीव्यविरोध इति व्यज्यते । उक्तिपदेन वक्तुस्थित्यभावाद्विषयप्रभावाच्च । इत्थं मनसा संभावनमपि नोचितम् । सुतरां बहिस्तदुक्तिः सापि जातेति व्यज्यते । जनानामुक्तय इति विग्रहाद्यः कश्चिदित्थं प्रलपतीत्यपि न किंतु बहुजना एवं वदन्तीति व्यज्यते । षष्ठीबहुवचनेन विग्रहे प्रमाणं तु—रे रे पौरजानपदाः, 'न खलु भवता देव्याः स्थानं गृहेऽभिमतं ततः' इत्यादिवक्ष्यमाणरामवचनम् । तेऽपि कदाचिदित्युक्त्वा विरमन्तीत्यपि न बहुकृत्वो वदन्तीति बहुवचनार्थः । अपुण्या इति व्यतिरेकोक्त्या कश्चिदपि कदाचिदपि न यथार्थं प्रत्येति नापि वक्तीति व्यज्यते । **नाथवन्त इति** । अहं लोकानामधीशः, मम त्वं नाथा । तथा च—'यस्यैते तस्य तद्धनम्' इति न्यायेन लोकानामपि त्वमेव नायिकेत्याशयः । यद्वा त्वं मय्यात्मतयावस्थिता, अहं च त्वयि तथावस्थितः । आह च **हनूमान्**—'अस्या देव्या मनस्तस्मिंस्तस्य चास्यां प्रतिष्ठितम् । तेनेयं स च धर्मात्मा मुहूर्तमपि जीवति ॥' इति । तथा च लौकिकैर्मयि प्रतिपद्यमानं लोकनाथत्वं त्वदीयमित्यर्थ इत्याद्यूहनीयम् । त्वमनाथेति त्वत्सत्तामात्रं मम लोकनाथत्वे प्रयोजनम् । अहं तु त्वदृते व्यर्थ इति भावः । विपत्स्यसे विपन्ना भविष्यसि । पूर्ववियोगोऽपि रावणवधेप्सितत्वादसत्कल्प इति न तस्मिंस्त्वं विपन्ना, अस्य तु वियोगस्य 'सौमित्रेरपि पत्रिणामविषये तत्र प्रिये क्वासि मे' इति वक्ष्यमाणरीत्या पूर्वोपायाविषयत्वात् इतः परमेव विपन्ना भविष्यसीति त्वटा व्यज्यते । पूर्वार्धे विभावनाविशेषोऽलंकारः । 'विरुद्धात्कार्यसंपत्तिर्दृष्टा काचिद्विभावना' इति लक्षणात् ॥ ४३ ॥ **इक्ष्वाकुवंश इति** । विशुद्धिकाले यदद्भुतं कर्म तद्यदि तदस्तीति यद्युच्यते तद्दूरवृत्तं कः प्रत्येति? । न कोऽपी-

१ 'तद्यतिदूर॰' इति पा॰ ।

**दुर्मुखः**—हा देवि ! । (इति निष्क्रान्तः ।)

**रामः**—हा कष्टम् ! । अतिबीभत्सकर्मा नृशंसोऽस्मि संवृत्तः ! ।

शैशवात्प्रभृति पोषितां प्रियां[1]
सौहृदादपृथगाश्रयामिमाम्[2] ।
छद्मना परिददामि मृत्यवे
सौनिके[3] गृहशकुन्तिकामिव ॥ ४५ ॥

तत्किमस्पृश्यः[4] पातकी देवीं दूषयामि । (इति सीतायाः शिरः समुन्नमय्य बाहुमाकर्षन्) ।

अपूर्वकर्मचण्डालमयि मुग्धे विमुञ्च माम् ।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम् ॥ ४६ ॥

---

त्यर्थः ॥ ४४ ॥ **हा कष्टमिति** । नृशंसः क्रूरः । अतिबीभत्सकर्मेति प्रसिद्धनृशंसाद्यावृत्तिः । **शैशवादिति** । शैशवात्प्रभृति पोषितां बाल्यमारभ्य वर्धिताम् । अनेन 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इति न्यायः स्फोर्यते । ननु स्वाप्रियत्वे त्याज्यत्वमित्यत्राह—**प्रियामिति** । ननु तथापि दोषप्रसक्तौ का गतिरित्यत्राह—**अपृथगाश्रयामिति** । पृथगाश्रयरहितामित्यर्थः । ननु तथापि मनोवृत्तिरन्यत्रेत्यत आह—**सौहृदादिति** । इमामितीदंपदेन तात्कालिकान्तर्वत्नी त्वनिद्रावत्त्वादिकं परामृश्यते । छद्मना व्याजेन । सीताभिलषितनवप्रस्थापनव्याजेनेत्यर्थः । मृत्यवे परिददामि । देयसाकल्याद्दानसाकल्यम् । तदिमाम् । गर्भस्थशिशुद्वयं चेत्यर्थः । सौनिके जीवहिंसाजीविनि । 'कर्मणा यमभिप्रैति स संप्रदानम्' (१।४।३२) इति चतुर्थ्यर्थे सप्तमी । प्रथमान्तपाठोऽप्यस्ति । गृहशकुन्तिकामित्यत्र 'अनुकम्पायाम्' (५।३।७६) इति कन् ॥ ४५ ॥ **अपूर्वेति** । अत्र मुग्धे विमुञ्च मामिति सिद्धसाध्यसमभिव्याहारन्यायेन अद्यतनमोचनप्रसञ्जकवतीत्यर्थो लभ्यते । मौग्ध्यस्य मोचनप्रसञ्जकत्वं च तदापादकसंपर्कापादनद्वारा । स च संबन्धो रावणप्रत्याख्यानपूर्वको लङ्कादेशीय एव । तथा हि—भवितव्यः परगृहवासो जातः, तथापि नैतावता ममात्याहितं प्रसज्जति । रावणो न मां बलात्कर्तुमर्हति । ततश्च सदभिमततदसंपादनेनैव कालयापनं सुकरम् । प्रत्याशया च स मां न हनिष्यति । रामस्तु इदानीं मां निर्दोषां परीक्ष्यानुमन्यमानोऽपि कदाचित्कस्यचिद्वचनमनुसरन् लोकाराधनश्रद्धया मामरण्ये परित्यजेत् इत्यादिको विचारः सीतायां स्यात् । तदा नैवंविधदुःखानुभवप्रसक्तिरिति तदिदं मौग्ध्यस्याद्यतनविपत्प्रयोजकत्वमित्याशयः । सर्वमिदं निर्वेदातिशयद्योतकम् । अपूर्वश्चासौ कर्मचण्डालश्चेति विग्रहः । चण्डालो हि क्रूरतमः । कर्मचण्डालस्तु सुतराम् । यस्त्वत्रापूर्वो विलक्षणः अहं कर्मचण्डालो रावणादपि क्रूर इति भावः । स हि रावणो न सीतायाः प्राणहानिकरोऽभवत् । अहं तु तत्कारी भवामीति पूर्वोक्तमौग्ध्यहेतु-

---

१ 'प्रियैः' इति पा० । २ 'पृथगाशयां प्रियाम्' इति पा० । ३ 'सौनिको' इति पा० । ४ अस्पर्शनीयः' इति पा० ।

(उत्थाय ।) हन्त हन्त, संप्रति विपर्यस्तो जीवलोकः ! । अद्यावसितं जीवितप्रयोजनं रामस्य ! । शून्यमधुना जीर्णारण्यं जगत् ! । असारः संसारः ! । काष्ठप्रायं शरीरम् ! । अशरणोऽस्मि ! । किं करोमि ? । का गतिः ? । अथवा

दुःखसंवेदनायैव रामे चैतन्यमागतम् ।
मर्मोपघातिभिः प्राणैर्वज्रकीलायितं हृदि ॥ ४७ ॥

कारमसंश्रयणमेवाह-**श्रितासीति** । द्रुमत्वोक्तिर्भूयस्त्वाभिप्रायात् । दुर्विपाकत्ववचनमत्यन्तक्रौर्यातिशयप्रतिपत्त्यर्थम् । चन्दनभ्रान्त्येत्येतद्दुःखभूयस्त्वावर्जनीयत्वख्यापनार्थम् । अन्यभ्रान्तौ प्रवृत्तिमान्द्यादिकं स्यात् । असीत्यनेनाद्यापि न मुञ्चसीत्यपि व्यज्यते । श्रितेति कर्तृवाचकनिष्ठान्तम् । तेन श्रयणस्य लङ्कादेशीयत्वलाभः । अयमाशयः—लोके हि फलवज्जातीयानामपि वृक्षाणामफलत्वे छेद एवोचितः । अनर्थावहत्वे तु सुतराम् । विषवृक्षस्य तु छेदे का प्रतिहतिः ? । तस्यापि दुर्विपाकत्वे सर्वथा छेद्यत्वमेव । तथापि 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इति न्यायेन यदि छेदप्रतिषेधः, तर्हि तस्य परित्यागे का प्रतिहतिः ? । अत्र क्रूररामकर्मकसंश्रयणप्रतिबिम्बस्य सीताप्रस्तुतकर्तृकदुर्विपाकविषद्रुमाश्रयणस्य वर्णनाल्ललितालंकारः । 'प्रस्तुते वर्ण्यवाक्यार्थप्रतिबिम्बस्य वर्णनम् । ललितम्' इति लक्षणात् ॥ ४६ ॥ हन्तेति दुःखे । संप्रति सीताविरहे । विपर्यस्तोऽन्यथाभूतः । साहित्ये 'यस्त्वया सह स स्वर्गो निरयो यस्त्वया विना' इति रामायणोक्तरीत्या जीवलोकस्य स्वर्गत्वम् । वियोगे तु नरकत्वमेवेति । स्वर्गान्यस्य नरकस्यैव स्वारसिकत्वात्प्राणिनां नरकप्राप्तावपि नात्मवस्तुनाशः । मम तु सीतामयजीवितत्वात्तन्नाशे जीवितनाश इति । अद्यावसितमिति समाप्तं जीवितमेव प्रयोजनम् । जीवितमिति वक्ष्यमाणमिहानुसंधेयम् । सीताविरहितजीवितं निष्प्रयोजनमित्यर्थः । यत एवं ततोऽधुना जीर्णारण्यं जगत् । स्वर्गादिकं ह्यात्मनः स्थिरत्वे कालान्तरानुभाव्यं स्यात् । 'अनादौ संसारे' इति न्यायात् । आत्मवस्तुनाशे तु स्वानुपभोगात् जीर्णारण्यत्वम् । सीतासाहित्ये हि अरण्यस्यापि पञ्चवट्याः 'यस्यां ते दिवसाः' इति रीत्या स्वगृहत्वात् तदयोगे तु स्वगृहस्यापि जीर्णारण्यत्वमित्याशयः । असारः शून्यः । काष्ठप्रायं शरीरम् । 'ज्योत्स्नेव हिमदीधितेः' इत्युक्त्या यथा चन्द्रस्य कौमुद्यभावे काष्ठप्रायता तद्वत्स्वस्येति भावः । अद्य पूर्ववत् 'सुग्रीवं शरणं गतः', 'सागरं शरणं गतः' इत्यादिकस्य नावकाश इत्याह-**अशरणोऽस्मीति**। पूर्ववत्सेतुबन्धनादि कर्तव्यं नास्तीत्याह—**किं करोमीति** । अद्य पूर्ववद्रावणवधादिरूपं प्राप्यं नास्तीत्याह—**का गतिरिति** । गम्यत इति गतिः । यतश्चैवं ततः क्व गच्छामि, किमरण्यं गच्छामि, उत पातालविवरम् ? । किंवा मरणं गच्छामि ? इति विकल्पाशयः । न तूक्तः कल्पः सर्वोऽपि न कल्पत इत्याह-**अथ वेति**। पूर्वोक्ताक्षेपकः । **दुःखेति**। चैतन्यमात्मा ज्ञप्तिर्वा । दुःखसंवेदनायैव रामे आगतम् । आगतमित्यनेन दुर्मुखवाक्यश्रवणानन्तरं गतं चैतन्यं पुनरागतमिति

१ 'आहितम्' इति पा० ।

हा अम्ब अरुन्धति, भगवन्तौ वसिष्ठविश्वामित्रौ, भगवन् पावक, हा देवि भूतधात्रि, हा तात जनक, हा मातः, हा प्रियसख महाराज सुग्रीव, सौम्य हनूमन्, महोपकारिन् लङ्काधिपते विभीषण, हा सखि त्रिजटे, परिमुषिताः स्थ परिभूताः स्थ रामहतकेन ! । अथवा को नाम तेषामहमिदानीमाह्वाने ? ।

ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना ।
मया गृहीतनामानः स्पृश्यन्त इव पाप्मना ॥ ४८ ॥

योऽहम्—

विस्रम्भादुरसि निपत्य जातनिद्रा-
मुन्मुच्य प्रियगृहिणीं गृहस्य लक्ष्मीम् ।
आतङ्कस्फुरितकठोरगर्भगुर्वीं
क्रव्याद्भ्यो बलिमिव दारुणः क्षिपामि ॥ ४९ ॥

(सीतायाः पादौ शिरसि कृत्वा ।) अयं पश्चिमस्ते रामशिरसि पादपङ्कजस्पर्शः ! ।

(इति रोदिति ।)

(नेपथ्ये ।)

---

व्यज्यते । यद्वा शक्तिप्रहारादिषु गतं पुनरागतमिति वा । पट्टाभिषेकादिनान्तरीयकसुखं तु असत्कल्पमिति हृदयम् । 'अर्पितम्' 'आहितम्', इति पाठयोस्तु आदितः प्रभृति 'राज्याद्भ्रंशो वने वासः सीता नष्टा द्विजो हतः । ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम् ॥' इत्युक्तरीत्या दुःखानुभवायैव चैतन्यसद्भाव इति भावः । स्वर्गिणां चैतन्यं दुःखासंभिन्नसुखानुभवाय । जनानां दुःखामिश्रसुखानुभवाय । मम सुखासंभिन्नदुःखानुभवाय । तस्मात्पातालविवरगमनेऽप्यपरिहार्यं दुःखमिति भावः । तर्हि मरणं गमिष्यामीति कल्पः कल्प्यतामित्याह–**मर्मोपघातिभिरिति** । मर्म हृदयादिप्रदेशानुपघ्नन्तीति विग्रहः । 'सुप्यजातौ–' (३।२।७८) इति णिनिः । न केवलं दुःखानुभवापादकाः किं तु स्वयमपि दुःखप्रदा इति भावः । वज्रकीलवद्दुरुद्धरतया स्थिरीभूयते । भङ्गानर्हत्वेन वा सादृश्यम् । तथा च मरणमपि दुर्लभमित्यर्थः ॥४७॥ **हेति** । अरुन्धति । अरुन्धतीकृतसीतापातिव्रत्यानुमोदनं न प्रमाणीकृतमिति भावः । **भगवन्ताविति** । भवतां ज्ञानशक्तिमपि खला न पश्यन्तीति भावः । **पावकेति** । तव वचनप्रवेशौ व्यर्थाविति भावः । भूतधात्रि, त्वत्सुतायामनिमित्तदोषवादिनो जनान् कथं बिभर्षीति भावः । **सौम्येति** । सीतावृत्तान्तकथनजनितानन्दप्रयुक्तमत्कृतालिङ्गनमद्विज्ञातशरीरसौभगभवदीयप्रयासोव्यर्थ इति भावः । परिमुषिताः मुषितद्रव्यकाः । **ते हीति** । कृतमुपकारं हन्तीति कृतघ्नः । एतत्कृतपूर्वोपकारविस्मरणादिति भावः ॥ ४८ ॥ **विस्रम्भादिति** । विस्रम्भादन्तरङ्गत इति ज्ञानादिति भावः । गृहस्य लक्ष्मीं शोभां तदलंकारभूताम् । कठोरगर्भः पूर्णगर्भः । गुर्वीमित्यनेव यमलत्वं सूचयति । क्रव्याद्भ्यो मांसभक्षकेभ्यः ।

अब्रह्मण्यमब्रह्मण्यम् ! ।

**रामः**—ज्ञायतां भोः, किमेतत् ? ।

(पुनर्नेपथ्ये ।)

ऋषीणामुग्रतपसां यमुनातीरवासिनाम् ।
लवणत्रासितः स्तोमस्त्रातारं त्वामुपस्थितः ॥ ५० ॥

**रामः**—कथमद्यापि राक्षसत्रासः ? । तद्यावदस्य दुरात्मनो माधुरस्य कुम्भीनसीकुमारस्योन्मूलनाय शत्रुघ्नं प्रेषयामि । (परिक्रम्य पुनर्निवृत्य ।) हा देवि, कथमेवंविधा गमिष्यसि ? । भगवति वसुंधरे, सुश्लाघ्यां दुहितरमवेक्षस्व जानकीम् ।

जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।
यां[1] देवयजने पुण्ये पुण्यशीलामजीजनः ॥ ५१ ॥

(इति रुदन्निष्क्रान्तः ।)

**सीता**—हा* सोम्ह अज्जउत्त, कहिं सि ? । (इति सहसोत्थाय ।) हद्धी हद्धी ! । दुस्सिविण[2]रणरणअविप्पलद्धा अज्जउत्तसुण्णं विअ अत्ताणं पेक्खामि ! । (विलोक्य ।) हद्धी हद्धी ! । एआइणिं पसुत्तं मं उज्झिअ कहिं

---

* हा सौम्य आर्यपुत्र, कुत्रासि ? । हा धिक् हा धिक् ! । दुःस्वप्नरणरणकविप्रलब्धा आर्यपुत्रशून्यमिवात्मानं पश्यामि । हा धिक् हा धिक् ! । एकाकिनीं प्रसुप्तां मामुज्झित्वा कुत्र गतो नाथः ? । भवतु । तस्मै कोपिष्यामि यदि तं प्रेक्षमाणा आत्मनः प्रभविष्यामि । कोऽत्र परिजनः ? ।

---

क्रव्यं मांसमदन्ति खादन्तीति विग्रहः । 'क्रव्ये च' ( ३।२।६९ ) इति विट् ॥ ४९ ॥ अब्रह्मण्यं ब्राह्मणानामत्याहितम् । 'अब्रह्मण्यमवध्योक्तौ' इत्यमरः ॥ **ऋषीणामिति** । लवणो नाम राक्षसस्तेन त्रासितो ऋषीणां स्तोम इत्यन्वयः ॥ ५० ॥ **कथमित्यादि** । निःशेषितराक्षसकुलत्वात्स्वस्येति भावः । यद्वा कथमद्य राक्षसत्रासोऽपीत्यन्वयः । न केवलं सीताविश्लेषदुःखप्राप्तिः किं तु राक्षसभयं चेति समुच्चयार्थः । कथमिति विस्मये । पूर्ववदेवोभयं मिलितमिदमाश्चर्यमिति भावः । दुरात्मनो दुर्बुद्धेः । माधुरस्य मधुरेश्वरस्य । कुम्भीनसी नाम तन्माता । उन्मूलनाय मूलेन सहोत्पाटनायेति यावत् । प्रेषयामि प्रेषयिष्यामि । 'यावत्पुरानिपातयोर्लट्' ( ३।३।४ ) । एवंविधा मया वञ्चिता गर्भिणी सती कथं गमिष्यसीति भावः । भगवति सर्वज्ञे । सुश्लाघ्यां निर्दोषां निरुपद्रवां वा । **जनकानामिति** । यत्कृत्स्नं

---

१ 'तां' इति पा० । २ 'रणरण°' इति क्वचिन्न पठ्यते ।

गदो णाहो ? । होदु । से कुप्पिस्सं जइ तं पेक्खंती अत्तणो पहविस्सं । को एत्थ परिअणो ? ।

(प्रविश्य ।)

**दुर्मुखः**—देवि*, कुमारलक्खणो विण्णवेदि—'सज्जो रहो । तं आरुहदु देवी' त्ति ।

**सीता**—इअं† आरूढम्हि । (उत्थाय परिक्रम्य ।) फुरइ मे गब्भभारो । सणिअं गच्छम्ह ।

**दुर्मुखः**—इदो‡ इदो देवी ।

**सीता**— णमो§ रहुउलदेवदाणं[2] ! ।

(इति निष्क्रान्ताः सर्वे ।)

**इति महाकविश्रीभवभूतिविरचित उत्तररामचरिते प्रथमोऽङ्कः ।**

---

* देवि, कुमारलक्ष्मणो विज्ञापयति—'सज्जो रथः । तदारोहतु देवी' इति ।

† इयमारूढास्मि । स्फुरति मे गर्भभारः । शनैर्गच्छामः ।

‡ इत इतो देवी ।

§ नमो रघुकुलदेवताभ्याम् ।

---

गोत्रमङ्गलम् । यदिति विधेयापेक्षया क्लीबम् । अजीजनः । उत्पादितवत्यसीत्यर्थः । अत्र बिन्दुर्नाम संध्यङ्गमुक्तम् । दाम्पत्यविशेषविच्छेदहेतुत्वात्पुनरच्छेदकारणत्वाच्च । तदुक्तम्—'अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम्' इति ॥ ५१ ॥ कोऽत्र परिजनः ? । परिजनस्य मध्ये कोऽत्र संनिहित इत्यर्थः । परिजनस्येति निर्धारणे षष्ठ्येकवचनान्तम् । निर्धारणे षष्ठीप्रयोगोऽप्यस्ति ॥ सद्यो गमनाय संनद्धः ॥ रघुकुलदेवते लक्ष्मीनारायणाविति प्रसिद्धमेव । तन्नमस्कारो यात्राकाले विहितः । 'आदित्यमण्डले विष्णुं ध्यात्वा यात्रां प्रवर्तयेत्' इति स्मरणात् ॥

दाशरथिवंशजनुषो भूसारजवीरराघवार्यस्य ।
उत्तररामचरित्रव्याख्याङ्केष्वादिमः प्रायात् ॥

**इति श्रीवाधूलवीरराघवविरचितायां भवभूतिभावतलस्पर्शिनीसमाख्यायामुत्तररामचरितव्याख्यायां प्रथमोऽङ्कः ।**

---

१ 'आरुह्यामि' इति पा० । २ अस्याग्रे 'णमो अज्जउत्तचरणकमलाणं सअलगुरुअणाणं' इति पा० ।

# उत्तररामचरितम् ।

द्वितीयोऽङ्कः ।

(नेपथ्ये ।)

स्वागतं तपोधनायाः ! ।

(ततः प्रविशत्यध्वगवेषा तापसी ।)

**तापसी**—अये, वनदेवता[1] फलकुसुमगर्भेण पल्लवार्घ्येण दूरान्मामुपतिष्ठते ।

(प्रविश्य ।)

**वनदेवता**—(अर्घ्यं विकीर्य ।)

यथेच्छा[2]भोग्यं वो वनमिदमयं मे सुदिवसः
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ।
तरुच्छाया तोयं यदपि त[3]पसां योग्यमशनं
फलं वा मूलं वा तदपि न पराधीनमिह वः ॥ १ ॥

**नेपथ्य इति** । 'कुशीलवकुटुम्बस्य स्थली नेपथ्यमिष्यते' इत्युक्ततिरस्करिणीतिरोहितनर्तनभूमिकापरिग्रहौपयिकस्थानविशेष इत्यर्थः ॥ **वनदेवतेति** । पल्लवार्घ्येण पल्लवयुक्तपूजाद्रव्येण दूरात् प्रविष्टा सती उपतिष्ठते पूजयति । देवतात्वारोपादात्मनेपदम् । दूरादित्यपादाने पञ्चमी । यद्वा मामुपतिष्ठते संगता भवति । 'गङ्गा यमुनामुपतिष्ठते' इतिवत् उभयत्रापि 'उपाद्देवपूजा–' इत्यादिना तङ् ॥ अर्घ्यं विकीर्य दत्त्वा । **यथेच्छेति** । इदम् । मदीयमित्यर्थः । वनं वनमेव न तु स्पृहणीयपुरप्रासादादिकमित्यपरितोषो व्यज्यते । तथापि 'अविद्यमानं कर्णोऽपि' इति न्यायेन यथाधिकारं सभाजयितव्यमेवेत्याह—यथेच्छाभोग्यं इच्छामनतिक्रम्य यथेच्छम् । यथेच्छं आभोग्यमिति विग्रहः । इच्छानिवृत्तिपर्यन्तमसंकोचेनोपभोगार्हमित्यर्थः । वः इति पूजायां बहुवचनम् । अतिथिसामान्याभिप्रायकं वा । अयं मे सुदिवसः साधुजनसंपर्कादिति भावः । सतां विद्यमानानामेव, नतु प्रसादनादि कुर्वतामित्यर्थः । सद्भिः साधुभिः सह सङ्गः संपर्कः कथमपि कृच्छ्रेण पुण्येन भवति साधुजनसंपर्कलाभः प्रणिपातादिसाध्यो भवति । तदभाववतां तु दृष्टहेत्वभावात् केवलादृष्टसाध्यो भवतीति भावः । यद्वा कथमपि सतां येन केन प्रकारेण वर्तमानानाम् । कामचारे स्थितानामित्यर्थः । सद्भिः ब्रह्मविद्भिरित्यर्थः । 'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रुतेः । सङ्गः संपर्कः पुण्येन हि भवति । अयमाशयः–'तस्मादेवंविदा नासीत' इति श्रुत्या ब्रह्मज्ञानवतां तच्छून्यैः सहवासादिकं प्रतिषिद्धम् । एवं च तेषां तैः सङ्गः पुण्यैकसाध्य इति । इदं च स्वनिकर्षभावनाकार्यम् । फलं वा मूलं वा इतोऽन्यदपि तपसां योग्यमशनम् । नीवारपाण्डुपत्त्रवातजलादिकमित्यर्थः । तदपि तच्च परा-

१ 'इयं' इत्यधिकं क्वचित् । २ '°च्छं भोग्यं वो' इति पा० । ३ 'तपसो' इति पा० ।

**तापसी**—किमत्रोच्यते ? ।

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २ ॥

(उपविशतः ।)

**वनदेवता**—कां पुनरत्रभवतीमवगच्छामि ? ।

**तापसी**—आत्रेय्यस्मि ।

**वनदेवता**—आर्ये आत्रेयि, कुतः पुनरिहागम्यते ? । किंप्रयोजनो दण्डकारण्योपवनप्रचारः ? ।

**आत्रेयी**—

अस्मिन्नगस्त्यप्रमुखाः प्रदेशे
भूयांस उद्गीथविदो वसन्ति ।
तेभ्योऽधिगन्तुं निगमान्तविद्यां
वाल्मीकिपार्श्वादिह पर्यटामि ॥ ३ ॥

**वनदेवता**—यदा तावदन्येऽपि मुनयस्तमेव हि पुराणब्रह्मवादिनं प्राचेतसमृषिं ब्रह्मपारायणायोपासते, तत्कोऽयमार्यायाः प्रवासः ? ।

---

धीनं नेति ॥ १ ॥ **प्रियेति** । प्रियप्राया प्रियप्रचुरा युक्ता चेत्यर्थः । वृत्तिः कायिकव्यापारः । तथापि वाक्क्रौर्ये महान्दोष इत्यत आह–विनयमधुरो वाचि नियमः विनयेन स्वनिकर्षभावनारूपेण स्वोत्कर्षाननुसंधानरूपेण वा मधुरः प्रियः वाचि नियमः सत्याय मितभाषित्वम् । तथापि मनोवृत्तिदौर्ध्यं स्यादत आह—प्रकृत्या कल्याणी मतिः प्रकृत्या स्वभावतः कल्याणी श्रेयस्विनी । तथाप्यसत्सङ्गवशाद्वैपरीत्यं स्यादत आह—अनवगीतः अनिन्दित इत्यर्थः। तदिदं वृत्तिवाचिनियमादिपरिचयसमुदायरूपं विजयते सर्वोत्कर्षेण वर्तते । तत्कथंभूतमित्याह–पुरो वा पश्चाद्वा भूतभविष्यत्कालयोः। तत्तत्पुरुषसंनिधानयोरिति वार्थः। अविपर्यासितरसं अन्यूनस्वभावम् । रसपदेन प्रियत्वं व्यज्यते । अनुपधि निर्व्याजं विशुद्धं प्रामादिकदोषरहितं रहस्यम् । 'शीलं संवसता ज्ञेयम्' इति न्यायेन चिरकालशुश्रूषादिभिरेव ज्ञातुं शक्यं नतु दाम्भिकवृत्तिवत्स्वयं प्रकटमित्यर्थः । तथाविधं तदिदं विजयत इति योजना ॥ २ ॥ अवगच्छामि जानामि ॥ **किंप्रयोजन इति** । प्रचारः संचारः ॥ **अस्मिन्निति** । अगस्त्यप्रमुखा अगस्त्यप्रभृतयो भूयांसो बहव उद्गीथविदः । 'ओमित्युद्गीथमुपासीत' इति परस्मिन् ब्रह्मणि उद्गीथदृष्टिं कुर्वन्त इत्यर्थः । दहरविद्यादीनामुपलक्षणम् । सकलवेदान्ततात्पर्यपर्यालोचनशीला इति भावः । तेभ्यः अधिगन्तुं तत्कृतव्याख्यानेन ज्ञातुम् । 'आख्यातोपयोगे' (१।४।२९) इति पञ्चमी । पर्यटामि । 'अट गतौ ॥३॥ **यदा तावदिति** । पुराणश्चासौ

**आत्रेयी**—तस्मिन्[1] हि महानध्ययनप्रत्यूह इत्येष दीर्घप्रवासोऽङ्गीकृतः ।

**वनदेवता**—कीदृशः ? ।

**आत्रेयी**—तस्य भगवतः केनापि देवताविशेषेण सर्वप्रकाराद्भुतं स्तन्यत्यागमात्रके वयसि वर्तमानं दारकद्वयमुपनीतम् । तत्खलु न केवलं तस्य[2], अपि तु तिरश्चामप्यन्तःकरणानि तत्त्वान्युपस्नेहयति ।

**वनदेवता**—अपि तयोर्नामसंज्ञानमस्ति ? ।

**आत्रेयी**—तयैव किल देवतया तयोः कुशलवाविति नामनी प्रभावश्चाख्यातः ।

**वनदेवता**—कीदृशः प्रभावः ? ।

**आत्रेयी**—तयोः किल सरहस्यानि जृम्भकास्त्राणि[3] जन्मसिद्धानीति ।

**वनदेवता**—अहो नु भोश्चित्रमेतत् ! ।

**आत्रेयी**—तौ च भगवता वाल्मीकिना धात्रीकर्मतः परिगृह्य पोषितौ रक्षितौ च । निर्वृत्तचौलकर्मणोस्तयोस्त्रयीवर्जमितरास्तिस्रो विद्याः सावधानेन परिनिष्ठापिताः । तदनन्तरं गर्भैकादशे वर्षे क्षात्रेण कल्पेनोपनीय गुरुणा त्रयीविद्यामध्यापितौ । न त्वेताभ्यामतिदीप्तिप्रज्ञाभ्याम[4]स्मदादेः सहाध्ययनयोगोऽस्ति । यतः—

---

ब्रह्मवादी चेति विग्रहः । ब्रह्म परमात्मानं वेदान् वा वदतीति णिनिः । पुराणत्वं प्राचेतसमिति हेतुकथनम् । ब्रह्मपारायणाय वेदान्तविद्याध्ययनाय । पारायणं नाम आदित आरभ्यान्तादविच्छेदेनाध्ययनमुपासते । **तदिति** । प्रवासो देशान्तरगमनम् ॥ **तस्मिन्निति** । प्रत्यूहो विघ्नः । **तस्येति** । स्तन्यत्यागमात्रं यस्मिन्निति बहुव्रीहेः कप्रत्ययः । दारकद्वयं शिशुद्वयम् । **तदिति** । तस्य वाल्मीकेः तिरश्चामपि मृगाणामप्यन्तःकरणानि हृदयरूपाणि तत्त्वानि पदार्थानुपस्नेहयति संनिधानीकरोति ॥ **अपीति** । नाम्नोऽभिलापकशब्दस्य संज्ञानं संकेतसंबन्धकरणम् ॥ **तयोरिति** । जन्मसिद्धानि जन्मना ज्ञातानि न तूपदेशेन ॥ **तौ चेति** । धात्रीकर्मत उपमातृव्यापारेण । पोषितौ क्षीरादिना वर्धितौ रक्षितौ । पिपीलिकादिभ्य इति भावः । **निवृत्तेति** । निवृत्तं निष्पन्नम् । त्रयीवर्जं त्रयीं वर्जयित्वा, अङ्गान्यपीति शेषः । इतराः 'आयुर्वेदो धनुर्वेदस्तथा गान्धर्वनामकः' इत्युक्ता इत्यर्थः । सावधानेन । वाल्मीकिनेति शेषः । परिनिष्ठापिताः सम्यङ्निष्पादिताः । **तदनन्तरमिति** । एकादशानां पूरणं एकादशम् 'तस्य पूरणे—' इति डट्प्रत्ययः । गर्भात् गर्भवर्षात् एकादशं गर्भैकादशं तस्मिन्नित्यर्थः । 'गर्भैकादशेषु राजन्यम्' इति स्मृतेः । कल्प्यतेऽनुष्ठीयतेऽनेनेति कल्पः । अनुष्ठानपरिपाटीप्रकाशकग्रन्थः । **न त्वेता-**

---

१ 'तत्र' इति पा० । २ 'ऋषीणां' इति पा० । ३ 'आ जन्म°' इति पा० । ४ 'प्रज्ञामेधाभ्यां' इति पा० ।

वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
न तु खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति हि पुनर्भूयान्भेदः फलं प्रति तद्यथा
प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदादयः ॥ ४ ॥

**वनदेवता**—अयमध्ययनप्रत्यूहः ।

**आत्रेयी**—अन्यश्च ।

**वनदेवता**—अथापरः कः ? ।

**आत्रेयी**—अथ स ब्रह्मर्षिरेकदा माध्यंदिनसवनाय नदीं तमसामनुप्रपन्नः । तत्र युग्मचारिणोः क्रौञ्चयोरेकं व्याधेन वध्यमानं ददर्श । आकस्मिकप्रत्यवभासां देवीं वाचमानुष्टुभेन छन्दसा परिणतामभ्युदैरयत् ।

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥ ५ ॥

**वनदेवता**—[1]आम्नायादन्यत्र नूतनच्छन्दसामवतारः ।

**आत्रेयी**—तेन हि पुनः समयेन तं भगवन्तमाविर्भूतशब्दप्रकाशमृषिमुपसंगम्य भगवान्भूतभावनः पद्मयोनिरवोचत्—'ऋषे, प्रबुद्धोऽसि

---

ष्यामिति । दीप्तिः प्रतिभा । प्रज्ञा ज्ञानं उक्तार्थग्रहणम् । **वितरतीति** । तयोः प्राज्ञजडयोः ज्ञाने शक्तिं न करोति, प्राज्ञस्य ज्ञाने अपूर्वां शक्तिं न जनयति । जडस्य ज्ञाने शक्तिं नापहन्ति जडस्य ज्ञानप्रतिष्ठां शक्तिं न नाशयति । बिम्बग्राहे प्रतिबिम्बज्ञानोत्पादने मणिः वज्रं रत्नसामान्यं वा । मृदादयः । आदिपदात् वृक्षपाषाणलोष्टग्रहणम् ॥ ४ ॥ अथेति प्रश्ने ॥ **अथेति** । माध्यंदिनसवनाय मध्यंदिनसंबन्धिकर्मणे । अनुप्रपन्नः प्राप्तः । **तत्रेति** । युग्मं द्वन्द्वं यथा तथा चरत इति युग्मचारिणौ तयोः क्रौञ्चयोः पक्षिविशेषयोः । व्याधेन पुलिन्देन । ददर्श अपश्यत् । आकस्मिकप्रत्यवभासां निर्हेतुकाविर्भावाम् । आनुष्टुभेन छन्दसा । स्वार्थिकोऽण्प्रत्ययः । **मा निषादेति** । प्रतिष्ठां तु अम गमः इति पदचतुष्टयं निषादपक्षे बोध्यम् । एवं च माङ्योगेऽडागमनिषेध उपपद्यते । अमेत्यस्य न विद्यते मा लक्ष्मीः यस्येति विग्रहः । एवं च अलक्ष्मीकेति निषादं प्रति मन्युर्गम्यते । अत एव भगवन्तं प्रति रावणवधजनितप्रीत्यतिशयेन मानिषादेति सलक्ष्मीकत्वप्रतिपादनम् । भगवत्परत्वे मा लक्ष्मीः निषीदत्यस्मिन्निति मानिषादः । बाहुलकादधिकरणे घञ् । तस्य संबुद्धिः निषेधार्थमाशब्देन अडागमसमर्थनं तु क्लिष्टम् । प्रतिष्ठां आस्पदम् । व्याधपक्षे मा गमः न गच्छेः । भगवत्पक्षे अगमः प्राप्तवानिति । समाः संवत्सरान् । अत्यन्तसंयोगे द्वितीया ॥ ५ ॥ आम्नायात् वेदात् ॥ **तेनेति** । तेन समयेन कालेन । भूतेन प्रजाः भावयति

---

१ 'त्रित्रं' इत्यधिकम् ।

वागात्मनि ब्रह्मणि । तद्ब्रूहि रामचरितम् । अव्याहतज्योतिरार्षं ते[1] चक्षुः प्रतिभातु । आद्यः कविरसि' इत्युक्त्वाऽन्तर्हितः । अथ स भगवान्प्राचेतसः प्रथमं मनुष्येषु शब्दब्रह्मणस्तादृशं विवर्तमितिहासं रामायणं प्रणिनाय ।

**वनदेवता**—हन्त पण्डितः[2] संसारः ! ।

**आत्रेयी**—तस्मादेव हि ब्रवीमि तत्र महानध्ययनप्रत्यूह इति ।

**वनदेवता**—युज्यते ।

**आत्रेयी**—विश्रान्तास्मि । भद्रे, संप्रत्यगस्त्याश्रमस्य पन्थानं ब्रूहि ।

**वनदेवता**—इतः पञ्चवटीमनुप्रविश्य गम्यतामनेन गोदावरीतीरेण ।

**आत्रेयी**—(सास्रम् ।) अप्येतत्तपोवनम् ? । अप्येषा पञ्चवटी ? । अपि सरिदियं गोदावरी ? । अप्ययं गिरिः प्रस्रवणः ? । अपि जनस्थानवनदेवता त्वं वासन्ती ? ।

**वनदेवता**—तथैव तत्सर्वम् ।

**आत्रेयी**—हा वत्से जानकि ! ।

स एष ते वल्लभशाखिवर्गः
प्रासङ्गिकीनां विषयः कथानाम् ।
त्वां नामशेषामपि दृश्यमानः
प्रत्यक्षदृष्टामिव नः करोति ॥ ६ ॥

**वासन्ती**—(सभयम् । स्वगतम् ।) कथं नामशेषेत्याह । (प्रकाशम् ।) आर्ये, किमत्याहितं सीतादेव्याः ? ।

---

उत्पादयतीति विग्रहः । यद्वा भूतं सत्यम्, निर्निरोधमिति वा । भावना अध्यवसायः यस्येति वा । पद्मयोनिः भगवन्नाभिकमलजातः । अनेन पूर्वोक्तभूतभावनत्वप्रयुक्तपरत्वशङ्का निराकृता । प्रबुद्धोऽसि प्रकृष्टज्ञानवानसि । वागेव आत्मा यस्य तस्मिन् ब्रह्मणि शब्दब्रह्मणि । वाचो वैपुल्याभिप्रायकं ब्रह्मत्वरूपणं ब्रह्मतत्त्वमेव शब्दरूपेण भातीत्यर्थ इति कैयटमतानुसारेण वा । अव्याहतज्योतिः अप्रतिहतप्रकाशं आर्षं ऋषिसंबन्धि योगजन्यज्ञानं चक्षुः नेत्रं ज्ञानमिति फलितोऽर्थः । 'तत्सर्वं मत्प्रसादेन विदितं ते भविष्यति' इत्यादि रामायणे द्रष्टव्यम् । आद्यः कविरसीत्युक्त्वा अनुगृह्य । अन्तर्हितः परोक्षतां गतः ॥ **स इति** । दृश्यमानः दृष्टिविषयीभूतः । प्रासङ्गिकीनां प्रसक्त्यनुप्रसक्त्या जातानां कथानां प्रश्नप्रतिवचनरूपाणां वाक्यसंदर्भाणां विषयः प्रतिपाद्यः वल्लभशाखिनां स्वयं वर्धितत्वात् अत्यर्थप्रीतिविषयाणां वृक्षाणां शाखिनामिति वचनं सीताकरस्पर्शप्रयुक्तस्फीतत्वाभिप्रायम् ॥ ६ ॥ दैवनिर्घातः दैवप्रहारः । दारुणः तीव्रः

---

१ 'प्रतिभाचक्षुः' इति पा० । २ 'मण्डितः' इति पा० ।

**आत्रेयी**—न केवलमत्याहितम्, सापवादमपि । (कर्णे ।) एवमिति ।

**वासन्ती**—हा दारुणो दैवनिर्घातः ! । (इति मूर्च्छति ।)

**आत्रेयी**—भद्रे, समाश्वसिहि समाश्वसिहि ।

**वासन्ती**—हा प्रियसखि, ईदृशस्ते निर्माणभागः ! । हा रामभद्र ! । अथवा अलं त्वया । आर्ये आत्रेयि, अथ तस्मादरण्यात्परित्यज्य निवृत्ते लक्ष्मणे सीतायाः किं वृत्तमिति काचिदासीत्प्रवृत्तिः ? ।

**आत्रेयी**—नहि नहि ।

**वासन्ती**—कष्टम् ! । आर्यारुन्धतीवसिष्ठाधिष्ठितेषु नः कुलेषु जीवन्तीषु च वृद्धासु राज्ञीषु कथमिदं जातम् ? ।

**आत्रेयी**—ऋष्यशृङ्गसत्रे गुरुजनस्तदासीत् । संप्रति परिसमाप्तं द्वादशवार्षिकं सत्रम् । ऋष्यशृङ्गेण च संपूज्य विसर्जिता गुरवः । ततो भगवत्यरुन्धती नाहं वधूविरहितामयोध्यां गच्छामीत्याह । तदेव राममातृभिरनुमोदितम् । तदनुरोधाद्भगवतो वसिष्ठस्यापि श्रद्धा वाल्मीकितपोवनं गत्वा वत्स्याम इति ।

**वासन्ती**—अथ स रामभद्रः किमाचारः ? ।

**आत्रेयी**—तेन राज्ञा राजक्रतुरश्वमेधः प्रक्रान्तः ।

**वासन्ती**—अहह धिक् ! । परिणीतमपि ? ।

**आत्रेयी**—शान्तम् ! । नहि नहि ।

**वासन्ती**—का तर्हि यज्ञे सहधर्मचारिणी ? ।

**आत्रेयी**—हिरण्मयी सीताप्रतिकृतिर्गृहिणी कृता ।

**वासन्ती**—हन्त भोः !

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ७ ॥

---

**हा प्रियसखीति** । निर्माणभागः सृष्टिफलम् । अथवेति जनवाक्यिप्रधानस्य दुःशकत्वादिति भावः । किं वृत्तमिति निष्पन्नमिति । प्रवृत्तिः वार्ता । आसीत् अभूत् किमिति काक्वा योजनीयम् ॥ **संप्रति परिसमाप्तमिति** । इदमेवाभिसंधाय पूर्वोक्तव्याख्यानमिति न विस्मर्तव्यम् । वधूविरहितां स्नुषाविरहिताम् । **तदन्विति** । तदनुरोधात् तदनुसरणात् । श्रद्धा निश्चयः । **यथेति** । किमाचारः कीदृशव्यापारवान् । **तेनेति** । राजक्रतुः राज्ञां साधारणो यः क्रतुः क्रतुराजो वा अश्वमेधः । राजदन्तादित्वात् परनिपातः । **सीतेति** । सीतायाः प्रतिकृतिः प्रतिमा । गृहिणी कृता धर्मपत्नीकृता ॥

---

१ 'अस्ति' इति पा० ।

**आत्रेयी**—विसृष्टश्च वामदेवानुमन्त्रितो मेध्याश्वः । प्रक्लृप्ताश्च[1] तस्य यथाशास्त्रं रक्षितारः । तेषामधिष्ठाता लक्ष्मणात्मजश्चन्द्रकेतुर्दत्तदि-[2]व्यास्त्रसंप्रदायश्चतुरङ्गसाधनान्वितोऽनुप्रहितः ।

**वासन्ती**—(सहर्षकौतुकास्रम् ।) कुमारलक्ष्मणस्यापि पुत्र इति मातर्[3], जीवामि ।

**आत्रेयी**—अत्रान्तरे ब्राह्मणेन मृतं पुत्रमुत्क्षिप्य राजद्वारे सोरस्ताड-नमब्रह्मण्यमुद्घोषितम् । ततो न राजापचारमन्तरेण प्रजानामकालमृत्युः संचरतीत्यात्मदोषं निरूपयति करुणामये रामभद्रे सहसैवाशरीरिणी वागुदचरत्—

शम्बूको नाम वृषलः पृथिव्यां तप्यते तपः ।
शीर्षच्छेद्यः स ते राम तं हत्वा जीवय द्विजम् ॥ ८ ॥

इत्युपश्रुत्यैवाकृष्टकृपाणपाणिः पुष्पकमधिरुह्य सर्वा दिशो विदिशश्च शूद्रतापसान्वेषणाय जगत्पतिः संचारं समारब्धवान् ।

**वासन्ती**—शम्बूको नामाधोमुखो धूमपः शूद्रोऽस्मिन्नेव जनस्थाने तपश्चरति । अपि नाम रामभद्रः पुनरिदं वनमलंकुर्यात् ।

**आत्रेयी**—भद्रे, गम्यतेऽधुना ।

**वासन्ती**—आर्ये आत्रेयि, एवमस्तु । कठोरश्च[4] दिवसः ।

---

**वज्रादपीति** । अयमाशयः—निर्दोषायां सीतायां रामहृदयस्य मृदुत्वमेव स्वाभाविकम् । कठोरत्वं तु मूर्खलोकानुसरणार्थत्वादागन्तुकमिति प्रतिकृतिकरणादवगम्यत इति । नच 'यस्य भार्या विदूरस्था यदि सा दूषितापि वा । अनिच्छुः प्रतिकूला च तस्याः प्रतिकृतौ क्रिया ॥' इति स्मरणात् । प्रतिकृतिकरणं मृदुत्वानुपपादकमिति वाच्यम् । तस्य परिणयान्तराशक्तनिरवकाशक्रियाविषयत्वात् । अश्वमेधादेः सावकाशत्वात् परिणयान्तरशक्तत्वात् । किंच सीतासदृशप्रतिमाकरणं मृदुत्वापादकमेव । एतादृशवि-चारसाध्यत्वात् 'को हि विज्ञातुमर्हति' इति तज्ज्ञानस्वरूपयोग्यतापि दुर्लभेत्युक्तम् । अत्रार्थान्तरन्यासालंकारः ॥ ७ ॥ वामदेवेन अनुमन्त्रितः अनुज्ञातः । वसिष्ठासंनिधा-नादिति भावः । मेध्याश्वः यज्ञीयाश्वः । **प्रक्लृप्ता** इति । यथाशास्त्रं शास्त्रोक्तन्यायेन । तेषामिति 'चतुःशता रक्षन्ति यज्ञस्याघाता ये' इत्यादिश्रुतिमनुल्लङ्घ्य अधिष्ठाता नियामकः अनुप्रहितः । **अत्रान्तर इति** । अब्रह्मण्यमिति वचनम् । उद्घोषितं उच्चैरुच्चारितम् । **तत इति** । राजापचारं राजदोषम् । निरूपयति मीमांसमाने । करुणामये परदुःखदुःखिलरूपानुकम्पाप्रचुरे । उदचरत् उद्गतवती । **शम्बूक इति** । तपः तप्यते

---

१ 'उपकल्पिताः' इति पा० । २ 'अवाप्त०' इति पा० । ३ 'हन्त' इति पा० । ४ 'कठोरीभूतः' इति पा० ।

कण्डूलद्विपगण्डपिण्डकषणाकम्पेन संपातिभि-
र्घर्मस्रंसितबन्धनैश्च कुसुमैरर्चन्ति गोदावरीम् ।
छायापस्किरमाणविष्किरमुखव्याकृष्टकीटत्वचः
कूजत्क्लान्तकपोतकुक्कुटकुलाः कूले कुलायद्रुमाः ॥ ९ ॥

(इति परिक्रम्य निष्क्रान्ते ।)

इति शुद्धविष्कम्भः ।

---

(ततः प्रविशति सदयोद्यतखड्गो रामभद्रः ।)

---

तपश्चरति । 'तप ऐश्वर्ये वा' इति तङ् । दिवादित्वात् श्यन् । शीर्षच्छेद्यः 'शीर्षच्छेदाद्यच्च' ( ५।१।६५ ) इति यत्प्रत्ययः ॥ ८ ॥ दिशः प्राच्यादयः, विदिशः आग्नेय्यादयः ॥ अपि नामेति अलंकुर्यादित्यनेनान्वयः । संभावनायामपिशब्दः॥ **कण्डूलेति ।** कण्डूलानां कण्डूमतां द्विपगण्डपिण्डानां पिण्डाकारगजकपोलानां कषणेन संघट्टनया आकम्पेन अत्यर्थचलनेन संपतन्तीति संपातिनः तथाविधैः घर्मेण निदाघौष्ण्येन स्रंसितबन्धनैः शिथिलितवृन्तैः छायायां अनातपे । अपस्किरमाणाः भक्षार्थं चञ्च्वा भूमिं लिखन्तः । 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्' । ( १।३।२१ वा. ) । 'अपाच्चतुष्पाच्छकुनिष्वालेखने' ( ६।१।१४२ ) इति वार्तिकसूत्राभ्यां तङ्सुटौ । तथाविधानां विष्किराणां वायसादीनां मुखैः व्याकृष्टा कीटत्वक् येषामिति विग्रहः । कपोताः पारावताः कुक्कुटाः चरणायुधाश्च ते कूजन्तः क्लान्ताश्च येष्विति विग्रहः । कूले । तीरवर्तिन इत्यर्थः । कुलायद्रुमाः पक्षिनीडयुक्तद्रुमाः स्वकुसुमैः गोदावरीं अर्चन्ति पूजयन्ति इति संबन्धः । अत्र वृक्षवर्णनया वैदिकशिरोमणीनां गृहमेधिनां मध्याह्नकालवृत्तान्तः प्रतीयते । कण्डूलेत्यादिविशेषणेन द्रव्याणां दुरूहशास्त्रार्थसंदेहनिर्णयार्थमुपसन्नैः तैः तत्कृतोपदेशनिवृत्तसंशयतया संतुष्टैः भूमिपतिभिः समर्पितत्वं प्रतीयते । घर्मस्रंसितैरित्यनेन तेषां 'कषाये कर्मभिः पक्वे' इति निवृत्तकामलोभादितया द्रव्याणां देवताराधनतया प्रतिहतप्रदानं प्रतीयते । 'छायापस्किरमाण-' इत्यनेन तेषां गृहेषु अतिथयः स्वयमागत्य भोज्यानि भुञ्जत इति प्रतीयते । 'कूजत्क्लान्त-' इत्यनेन तेषां मध्याह्नकालप्रयुक्तः श्रान्तियुक्तनानाशाखाध्येतृनानाबटुसमाजपौष्कल्यं प्रतीयते । 'कुलाय-' इत्यनेन तेषामनेककुटुम्बभरणं प्रतीयत इति सहृदया दयां कुर्वन्तु ॥ अत्र कुसुमपतनस्य गोदावरीपूजात्वोत्प्रेक्षा कृता । सा च गम्या वाचकशब्दप्रयोगाभावात् । 'तस्य भगवतः केनापि' इत्यारभ्य 'अयमध्ययनप्रत्यूहः' इत्यन्तेन अष्टावक्रप्रवेशात् लक्ष्यस्य सीतावनप्रापणेनालक्ष्यस्य बीजस्योद्भेदात् प्रतिमुखसंधिरियम् । 'लक्ष्यालक्ष्यस्य बीजस्य व्यक्तिः प्रतिमुखं मतम् !' इति लक्षणात् । 'अप्येतत्तपोवनम्' इत्यारभ्य दृष्टनष्टपदार्थानुसरणरूपपरिसर्प उक्तः । 'हा रामभद्र !' इति प्रमुखनिष्ठुरवचनरूपं वज्रमुक्तम् । 'सीताप्रतिकृतिः' इत्यादिनानुरागप्रकाशनरूपप्रगम उक्तः । 'वज्रादपि' इत्यत्र अरत्युपशमनात्मकः शम उक्तः । 'विसृष्टश्च वामदेवानुमन्त्रितः' इत्यारभ्य 'जनस्थान एव तपश्चरति' इत्यन्तेन ब्रह्मक्षत्रियशूद्राणां कीर्तनात् वर्णसंकर उक्तः-

**रामः**—

हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य
जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य बाहुरसि निर्भरगर्भखिन्न-
सीताविवासनपटोः करुणा कुतस्ते ॥ १० ॥

(कथंचित्प्रहृत्य ।) कृतं रामसदृशं कर्म । अपि जीवेत्स ब्राह्मणपुत्रः ।

(प्रविश्य ।)

**दिव्यपुरुषः**—जयतु देवः ! ।

दत्ताभये त्वयि यमादपि दण्डधारे
संजीवितः शिशुरसौ मम चेयमृद्धिः ।
शम्बूक एष शिरसा चरणौ नतस्ते
सत्सङ्गजानि निधनान्यपि तारयन्ति ॥ ११ ॥

**रामः**—द्वयमपि प्रियं नः, तदनुभूयतामुग्रस्य तपसः परिपाकः ।

यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च संपदः ।
वैराजा नाम ते लोकास्तैजसाः सन्तु ते शिवाः ॥ १२ ॥

---

इयं चूलिका । तदुक्तम्—'नेपथ्यान्तःस्थितैः पात्रैश्चूलिकार्थस्य सूचनम्' इति ॥ ९ ॥ उद्यतः उन्नमितः ॥ **हे हस्तेति** । दक्षिणहस्त अपसव्यहस्त, कृपाणं खड्गं शूद्रमुनौ विसृज विमुञ्च । निर्भरः पूर्णः । विवासनं निष्कासनम् । पटोरित्यनेन 'छद्मना परिददामि' इत्येतद्विवक्षितम् । अत्र विध्यलंकारः ॥ १० ॥ प्रहृत्य प्रक्षिप्येत्यर्थः । इदं चिन्त्यम्—'दूराध्वानं वधम्' इत्यारभ्य 'एतान्युद्वेगकारित्वात्प्रयोगानुचितानि' इति तन्निषेधात् । अत्रानिष्टवस्तुविक्षेपात् विधूतम् । **कृतमिति** । रामसदृशं कर्म, न तु दशरथसदृशं कर्म । दशरथो ह्यबुद्धिपूर्वकं शूद्रतापसवधं कृतवान् । तथा च पितुः शतगुणं पुत्रः' इति न्यायेन दोषविषय एव, न तु गुणविषय इति स्वोपालम्भ इह व्यज्यते । **अपि जीवेदिति** । अपिः संभावनायाम् । अशरीरवाण्या शिशुजीवननिश्चयेऽपि पावकवचनेन सीताया निर्दोषत्वनिश्चयेऽपि फलाभाववत् स्वीयदैवविपर्ययेणात्रापि तथा स्यादित्याशयः ॥ **प्रविश्येति** । दिव्यपुरुषः । शम्बूकशरीरं विहाय देवत्वेनेति भावः । **दत्ताभय इति** । यमादपि दत्ताभये त्वयि दण्डधारे सतीत्यन्वयः । यमहेतुकभयनिवारणदातरि यमशासितरि त्वयि सति असौ शिशुः बुद्धिस्थो ब्राह्मणशिशुः । निधनानि मरणानि तारयन्ति । संसाराब्धिमिति शेषः ॥ ११ ॥ **तदिति** । परिपाकः फलभूतः अनुभूयताम् । **यत्रेति** । आनन्दाः आत्मानुभवजन्या हर्षाः । मोदाश्च दिव्यविषयानुभवजन्या हर्षाः । संपदोऽणिमादिविभूतयः । वैराजा नाम

---

१ 'गात्रं' इति पा० ।

**शम्बूकः**—स्वामिन्, युष्मत्प्रसादादेवैष महिमा। किमत्र तपसा?। अथवा महदुपकृतं तपसा।

अन्वेष्टव्यो यदसि भुवने भूतनाथः शरण्यो
मामन्विष्यन्निह वृषलकं योजनानां शतानि।
क्रान्त्वा प्राप्तः स इह तपसां संप्रसादोऽन्यथा तु
क्वायोध्यायाः पुनरुपगमो दण्डकायां वने वः॥ १३॥

**रामः**—किं नाम दण्डकेयम्!। (सर्वतोऽवलोक्य।) हा! कथम्—

स्निग्धश्यामाः क्वचिदपरतो भीषणाभोगरूक्षाः
स्थाने स्थाने मुखरककुभो झांकृतैर्निर्झराणाम्।
एते तीर्थाश्रमगिरिसरिद्गर्तकान्तारमिश्राः
संदृश्यन्ते परिचितभुवो दण्डकारण्यभागाः॥ १४॥

**शम्बूकः**—दण्डकैवैषा। अत्र किल पूर्वं निवसता देवेन—

---

वैराजा इति प्रसिद्धाः॥ १२॥ **युष्मत्प्रसादेति**। 'धातुः प्रसादान्महिमानमीशम्' इति श्रुतिः प्रत्यभिज्ञायते। किमत्र तपसा। तपसा किमत्रेत्यर्थः। **अथवेति**। तपःकर्तृको महोपकार इति भावः। तदुपपादयति—**अन्वेष्टव्य इति**। यदसीति प्रसिद्धवन्निर्देशात् 'सोऽन्वेष्टव्यः' इति श्रुतिः प्रत्यभिज्ञायते। अनेन कारणत्वमप्युक्तम्। 'कारणं तु ध्येयः' इति श्रुतेः। न केवलं प्रधानहिरण्यगर्भादिवत् कारणत्वम्, किंतु निरुपाधिकस्वामित्वं स्वीकृतमित्याह—**भूतनाथ इति**। 'एष सर्वभूताधिपतिः' इति श्रुतिः प्रत्यभिज्ञायते। पूर्वोक्तान्वेष्टव्यत्वादिफलमाह—**शरण्य इति**। 'एष सर्वभूतपालः' इति श्रुतिः प्रत्यभिज्ञायते। तेन हि पालनसामर्थ्यमृते सर्वेश्वरत्वहानिरित्युपबृंहणात् हरहिरण्यगर्भादीनां रक्षकत्वशङ्कानिरासः। इदं च घण्टाकर्णादिविषये स्पष्टम्। वृषलकं अज्ञातो वृषलो वृषलकः तम्। अज्ञाते कन्प्रत्ययः। अनेन प्रयासेनान्वेषणीयत्वं स्वस्य सूच्यते। अन्विष्यन्। ननु चारादिना अन्वेषयन्निति भावः। योजनानां शतानि अयोध्यादण्डकयोः योजनेयत्तानिश्चयेऽपि एवमुक्तिः कृत्स्नभूमण्डलान्वेषणानन्तरं अत्र प्राप्त इति सूचयति। तन्मूलं तु 'पृथिव्यां तप्यते तपः' इति अशरीरवाण्यां पृथिव्यामिति सामान्योक्तिः। प्राप्तः, ननु मां दूतैः प्रापितवानित्यर्थः। वृषलक इत्यत्र वृषं धर्मं लुनातीति वृषल इति व्युत्पत्त्या शुश्रूषां शूद्रस्य' इत्युक्तस्वधर्मच्छेदेन स्वतन्त्रतपश्चरणरूपस्वदोषाधीनत्वं विवक्षितम्। तपसा संप्रसादः तपःकृतानुग्रहः। पुनरित्यनेनापूर्ववनविलोकनस्पृहयान्यथासिद्धिर्वारिता। वनपदं दण्डकायामपि गमनप्रदेशत्वसूचनार्थम्। एवं सर्वप्रकारेणापि दुर्घटभवदागमनसंघटकत्वात् तपसां प्रसाद इति भावः॥१३॥ **स्निग्धेति**। श्यामाः नीलाः। आभोगः

---

१ 'प्रसादोपादानः' इति पा०।

चतुर्दश सहस्राणि चतुर्दश च राक्षसाः ।
त्रयश्च दूषणखरत्रिमूर्धानो रणे हताः ॥ १५ ॥

येन सिद्धक्षेत्रेऽस्मिन्[1]मादृशामपि जानपदानामकुतोभयः संचारः संवृत्तः ।

रामः—न केवलं दण्डकैव, जनस्थानमपि ।

शम्बूकः—बाढम् । एतानि खलु सर्वभूतरोमहर्षणान्युन्मत्तचण्डश्वापदकुलाक्रान्त[2]विकटगिरिगह्वराणि जनस्थानपर्यन्तदीर्घारण्यानि दक्षिणां दिशमभिवर्तन्ते । तथाहि

निष्कूजस्तिमिताः क्वचित्क्वचिदपि प्रोच्चण्डसत्त्वस्वनाः
स्वेच्छासुप्तगभीरभोग[3]भुजगश्वासप्रदीप्ताग्नयः ।
सीमानः प्रदरोदरेषु विरलस्वल्पाम्भसो[4] यास्वयं
तृष्यद्भिः प्रतिसूर्यकैरजगरस्वेदद्रवः पीयते ॥ १६ ॥

रामः—

पश्यामि च जनस्थानं भूतपूर्वखरालयम् ।
प्रत्यक्षानिव वृत्तान्तान्पूर्वाननुभवामि च ॥ १७ ॥

(सर्वतोऽवलोक्य ।) प्रियारामा हि वैदेह्यासीत् । एतानि नाम कान्ताराणि । किमतः परं भयानकं[5] स्यात् ! । (सास्रम् ।)

---

विपुलावकाशः । रूक्षाः चित्तक्षोभकराः । गर्ता अवटाः ॥१४॥ **चतुर्दशेति** । दूषणखरत्रिमूर्धान इति समासान्तविधेरनित्यत्वात् 'द्वित्रिभ्यां ष मूर्ध्नः' (५।४।११५) इति षप्रत्ययाभावः । केचित्तु दूषणखरत्रिमूर्धा नः इति पदद्वयं कृत्वा नः अस्माकं रणे दूषणखरत्रिमूर्धा हता इति षप्रत्ययान्तमेव समर्थयन्ते । अस्माकमिति रामेण समाधिना दिव्यपुरुषवचनं पक्षैक्याभिप्रायकम् । वस्तुतस्तु नोशब्दः पृथक्पदमित्याश्रित्य अत्र निवसता देवेन दूषणखरत्रिमूर्धा हताः नो किमिति काक्वा योजनीयम् । इयं च प्रत्यभिज्ञापनशैली गौरव्यविषयेष्वनुभवसिद्धा ॥१५॥ **येनेति** । सिद्धक्षेत्रे सिद्धिप्रदपुण्यक्षेत्रे अकुतोभयः नास्ति कुतो भयं यस्येति विग्रहः । **एतानीति** । रोमहर्षणानि रोमाञ्चजनकानि । **निष्कूजेति** । निर्गताः कूजाः कूजितानि येभ्य इति विग्रहः । कूजितशून्या इत्यर्थः । 'कूज अव्यक्तशब्दे' इत्यस्मात् भावे घञ्प्रत्ययः । सत्त्वानां जन्तूनाम् । प्रदरोदराणि गुहामध्याः । प्रतिसूर्यकैः वक्रकृकलासकैः ॥१६॥ **पश्यामीति** । भूतपूर्वो यः खरालयः तथाविधमित्यर्थः । भूतपूर्वः खरालयः खरगृहं यस्मिन्निति वा । प्रत्यक्षानिव पुरोवर्तमानानिव । अनुभवामि स्मृतिवैशद्येन प्रत्यक्षीकरोमि ॥ १७ ॥ कान्ताराणि दुर्गम-

---

१ 'जनस्थाने' इत्यधिकम् । २ 'सङ्कुलवि°' इति पा० । ३ 'घोर' इति पा० । ४ 'स्वच्छाम्भसः' इति पा० । ५ 'भयानकस्य' इति पा० ।

त्वया सह निवत्स्यामि वनेषु मधुगन्धिषु ।
इतीवारमते हासौ स्नेहस्तस्याः स तादृशः ॥ १८ ॥

न किंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ १९ ॥

शम्बूकः—तदलमेभिर्दुरासदैः । अथैतानि मदकलमयूरकण्ठकोमलच्छविभिरवकीर्णानि पर्यन्तैरविरलनिविष्टनीलबहुलच्छायातरुषण्डमण्डितान्यसंभ्रान्तविविधमृगयूथानि पश्यतु महाभागः प्रशान्तगम्भीराणि श्वापदकुलशरण्यानि महारण्यानि ।

इह समदशकुन्ताक्रान्तवानीरमुक्त-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥ २० ॥

अपि च ।

दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।

---

वर्त्मानि । भयानकं भयजनकम् । **त्वयेति** । मधुगन्ध एषु अस्तीति मधुगन्धीनि तेषु वनेषु इह कान्तारेषु आरमते प्रीतिं प्राप्तवत्येव । कुत इत्यत आह—**स्नेहस्तस्याः स तादृश इति** । 'हृदयं त्वेव जानाति प्रीतियोगं परस्परम्' इत्युक्तरीत्या परिच्छेदातीत इत्यर्थः ॥१८॥ **नेति** । यस्य प्रियः प्रीतिमान् प्रीतिविषयो वा यः जनः किंचिदपि न कुर्वाणः सन् किंचित्कारणलेशेनापि शून्यः सन् सौख्यैः स्वीयसुखैः करणैः दुःखान्यपोहति नाशयति । तत् दुःखनाशहेतुभूतो जनः । विधेयप्राधान्यात् नपुंसकत्वम् । तस्य अपोहनीयदुःखवतः पुरुषस्य किमपि विलक्षणं द्रव्यं भव्यवस्तु । 'द्रव्यं च भव्ये' इत्यनुशासनम् । यद्वा सौख्यैरिति इत्थंभूतलक्षणे तृतीया । तथा च सौख्यैः विशिष्टः सुखितः प्रियः इष्टः यः जनः यस्य न किंचिदपि कुर्वाणः स्वरूपातिरेकिव्यापारलेशशून्यः सन् दुःखानि अपोहति तदित्यादि पूर्ववत् । दुःखनिवृत्तिहेतुव्यापारलेशशून्यः सन्नपि स्वीयसुखविशिष्टः यः स्वरूपेणैव यद्दुःखनिवृत्तिं प्रति कारणं तं प्रति तस्य निस्तुलभव्यद्रव्यत्वमिति भावः । एवं चाहं सीताविषये किंचित्कारलेशशून्योऽपि सुखितः सन् तद्दुःखनिवर्तक इति कान्तारगमनं युक्तमेवेति हृदयस्थितोऽर्थः ॥१९॥ **अथेति** । पर्यन्तैः अभ्यर्णप्रदेशैः । छायाप्रधानास्तरवः छायातरवः । प्रशान्तानि अनुद्वेगजननानि । **इहेति** । शकुन्ताः पक्षिणः । वानीराः वेतसविशेषाः । मुखराणि शब्दवन्ति भूरीणि स्रोतांसि यासां ताः ॥२०॥ **दधतीति** । कुहरभाजां गुहावर्तिनां भल्लूकयूनां ऋक्षाणां अनुरसितेन

---

१ 'इतीहारमतेवासौ' इति पाठः, स एव युक्त इति प्रतीयते । २ 'दुःसहैः' इति पा० । ३ 'पर्वतैः' इति पा० । ४ 'मध्यमारण्यकानि ।' इति पा० ।

शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥ २१ ॥

रामः—(सबाष्पस्तम्भम् ।) भद्र, शिवास्ते पन्थानो देवयानाः ! । प्रलीयस्व पुण्येभ्यो लोकेभ्यः ! ।

शम्बूकः—यावत्पुराणब्रह्मर्षिमगस्त्यमभिवाद्य शाश्वतं पदमनुप्रविशामि । (इति निष्क्रान्तः ।)

रामः—

एतत्पुनर्वनमहो कथमद्य दृष्टं
यस्मिन्नभूम चिरमेव पुरा वसन्तः ।
आरण्यकाश्च गृहिणश्च रताः स्वधर्मे
सांसारिकेषु च सुखेषु वयं रसज्ञाः ॥ २२ ॥

एते त एव गिरयो विरुवन्मयूरा-
स्तान्येव मत्तहरिणानि वनस्थलानि ।
आमञ्जुवञ्जुलरुतानि[1] च तान्यमूनि
नीरन्ध्रनीपनिचुलानि[2] सरित्तटानि ॥ २३ ॥

मेघमालेव यश्चायमारादिव विभाव्यते ।
गिरिः प्रस्रवणः सोऽयं यत्र गोदावरी नदी ॥ २४ ॥

अस्यैवासीन्महति शिखरे गृध्रराजस्य वास-
स्तस्याधस्ताद्वयमपि रतास्तेषु पर्णोटजेषु ।
गोदावर्याः पयसि विततानोकहश्यामलश्री-[3]
रन्तःकूजन्मुखरशकुनो यत्र रम्यो वनान्तः ॥ २५ ॥

---

अनुरणनेन गुरूणि महान्ति अम्बूकृतानि निष्ठीवनशब्दानि स्त्यानं वृद्धिं वैपुल्यं वा दधति भजन्ति । निष्यन्दः स्वरसद्रवः स्त्यायते वर्धते विसरति वा ॥२१॥ देवयानाः देवयाननामकाः । ते च 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्' इत्युक्ताः । लोकेभ्यः लोकाननुभवितुम् । **एतदिति** । गृहिणः गृहमेधिनः । सांसारिकेषु जन्मफलभूतेषु ॥२२॥ **एत इति** । विरुवन्मयूराः कूजद्बर्हिणः ॥२३॥ **मेघमालेति** । मेघमालेव मेघमालासदृशः यः अयं पुरोवर्तिपदार्थः आरादिव समीपस्थ इव विभाव्यते ज्ञायते । यत्र गिरौ गोदावरी नदी सः प्रस्रवणो गिरिः ॥ २४ ॥ **अस्यैवेति** । मुखरशकुनः कूज-

---

१ '°लतानि' इति पा० । २ '°नीर°' इति पा० । ३ '°तश्यामलानो°' इति पा० ।

अत्रैव सा पञ्चवटी यत्र चिरनिवासेन विविधविस्रम्भातिप्रसङ्गसाक्षिणः प्रदेशाः प्रियायाः प्रियसखी च वासन्ती नाम वनदेवता। किमिदमापतितमद्य रामस्य!। संप्रति हि—

चिराद्वेगारम्भी प्रसृत इव तीव्रो विषरसः
कुतश्चित्संवेगात्प्रचल इव शल्यस्य शकलः।
व्रणो रूढग्रन्थिः स्फुटित इव हृन्मर्मणि पुनः
पुराभूतः[1] शोको विकलयति मां नूतन इव॥ २६॥

तथाविधानपि[2] तावत्पूर्वसुहृदो भूमिभागान्पश्यामि। (निरूप्य।) अहो, अनवस्थितो भूतसंनिवेशः!। तथाहि—

पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां
विपर्यासं यातो घनविरलभावः क्षितिरुहाम्।
बहोर्दृष्टं कालादपरमिव मन्ये वनमिदं
निवेशः शैलानां तदिदमिति बुद्धिं द्रढयति॥ २७॥

हन्त हन्त!। परिहरन्तमपि मां पञ्चवटी स्नेहाद्[3]बलादाकर्षतीव। (सकरुणम्।)

यस्यां ते दिवसास्तया सह मया नीता यथा स्वे गृहे
यत्संबन्ध[4]कथाभिरेव सततं दीर्घाभिरास्थीयत।

---

त्पक्षियुक्तः अत एव अन्तःकूजन् स्वयं कूजन्निव स्थितः॥ २५॥ **यत्रेति**। विस्रम्भाः स्वैरविलासाः। **चिरादिति**। तीव्रः स्पर्शदशायामपि दुःसहः। अनेन अज्ञातस्पर्शविषविशेषव्यावृत्तिः। चिरात् भूयांसं कालं शमिला। वेगं वेदनाशैघ्र्यं आरम्भयति उत्पादयतीति वेगारम्भी। अनेन पूर्वोक्तविषविशेषव्यावृत्तिः। प्रसृतः यत्राङ्गुल्यादौ स्पर्शः ततोऽन्यत्र सर्वाङ्गेषु प्रसृतः दलनादिना दुःसहप्रसरणः यः विषरसः तत्सदृश इत्यर्थः। रसशब्देन विशेषोत्कर्षो विवक्षितः। कुतश्चित् यस्मात्कस्माच्चित् संवेगात् संभ्रमादिजन्यात् निर्घातात् प्रचलः शल्यस्य बाणाग्रस्य शकलः खण्ड इव स्थितः। स हि मरणभयादनुद्धृत एव तिष्ठति। रूढाः प्रादुर्भूताः ग्रन्थय उपव्रणाः यस्मात् स तथोक्तः। स्फुटितः दलितः हृन्मर्मणि व्रण इव हृदयमर्मवर्तिव्रणसदृशः क्वाचित्कस्पर्शसार्वत्रिकप्रसरणाभ्यां प्रथमो दृष्टान्तः। प्रतिकार्यत्वशङ्काव्युदासाय द्वितीयः। स्वल्पकालत्वव्यावृत्तये तृतीयः। विशेषमाह—**नूतन इवेति**। विकलयति शून्यं करोति॥२६॥ अनवस्थितो भूतसंनिवेशः अनियता पदार्थस्थितिः। **पुरेति**। बहोः कालात् दृष्टं बहुकालमदृष्ट्वा दृष्टम्। ल्यब्लोपे पञ्चमी। यद्वा पूर्वदर्शनकालबहुविप्रकृष्टकाले दृष्टम्। 'सप्तमीपञ्चम्यौ' इति पञ्चमी। तदिदमिति बुद्धिं प्रत्यभिज्ञाम्। अत्र प्रस्तुतवृत्तान्तवर्णनात् अप्रस्तुतप्राणिकुटुम्बोपचयापचयपरिस्फूर्तिरिति कुवलयानन्दकृत्॥ २७॥ **यस्यामिति**।

---

१ 'घनीभूतः' इति पा०। २ 'तथापि तान्पूर्व°' इति पा०। ३ '°स्नेहो' इति पा०। ४ 'संबन्धि°' इति पा०।

एकः संप्रति नाशितप्रियतमस्तामेव रामः कथं
पापः पञ्चवटीं विलोकयतु वा गच्छत्वसंभाव्य वा ॥ २८ ॥

(प्रविश्य ।)

**शम्बूकः**—जयतु देवः । देव, भगवानगस्त्यो मत्तः श्रुतसंनिधान[2]स्त्वामाह—'परिकल्पितावरणमङ्गला[3] प्रतीक्षते वत्सला लोपामुद्रा, सर्वे च महर्षयः । तदेहि । संभावयास्मान् । अथ प्रजविना पुष्पकेण स्वदेशमुपगत्याश्वमेधाय सज्जो भव' इति ।

**रामः**—यथाज्ञापयति भगवान् ।

**शम्बूकः**—[4]इत इतो देवः ।

**रामः**—(पुष्पकं प्रवर्तयन् ।) भगवति पञ्चवटि, गुरुजनादेशोपरोधात्क्षणं क्षम्यतामतिक्रमो रामस्य ।

---

स्वे गृहे यथा यस्यां ते दिवसाः नीताः निरुपप्लवत्वरामणीयकादिभिः स्वगृहतुल्यायां यस्यां पञ्चवट्यां नीता अतिवाहिताः । न केवलं रात्रयो नीताः किंतु दिवसा अपि नीता इति दिवसपदेन व्यज्यते । तेन स्वगृहापेक्षया वैलक्षण्यमपि पञ्चवट्याः । तत्र हि—राज्यतन्त्रादिना दिवसेषु न सहावस्थानं घटते । तया सह मयेति वान्वयः । स्वगृहे गुरुसंनिधितिरोहितप्रणयपारतन्त्र्यसंकोचात् स्वगृहाद्विशेषः । यत्संबन्धकथाभिः कत्रींभिः । आस्थीयत । तिष्ठतेर्भावे लङ् । एवकारेण वाग्व्यापारान्तरप्रतिषेधः । यत्कथाभिः इत्यनुक्त्वा यत्संबन्धकथाभिरित्युक्तेः पञ्चवटीपरिसरवर्तिनामपि रामणीयकं व्यज्यते । अत्र 'स्मरन्कमलपत्राक्षीं रामः संध्यामुपागमत्' इत्युक्तरीत्या सर्वकालं बुद्धिस्थत्वात् तथेत्युक्तम् । तामेव, न तु यां कांचिदित्यर्थः । वियोगे हि रमणीयवस्तुदर्शनमात्रं दुःसहम्, किं पुनः सहानुभूतरमणीयदर्शनं दुःसहमिति । एकः केवलः । सीताशून्य इति भावः । ननु राज्ञः शुद्धान्त एव स्थित्यर्हायाः कथं सहगमनं घटते । परं प्रतिगमने तु सुलभमेव तद्दर्शनमिति किमिहात्याहितमित्यत्राह—**नाशितप्रियतम इति** । नाशितत्वमपि दैवाधीनं चेत् कथंचित् सह्यत एव, नतु तथा । किंतु **मदधीन** एव नाश इति दुःखातिशयो व्यज्यते । ननु तर्हि यत्र सा तत्रैव गम्यतामित्यत्राह—**पाप इति** । मरणप्रतिबन्धकपापवानित्यर्थः । 'तथाप्येष प्राणः स्फुरति न तु पापो विरमति' इत्युक्तेः । असंभाव्य असंमान्य रामः पञ्चवटीं विलोकयतु । वेत्यन्यादृशशैल्यात् सर्वथा न मत्स्वरूपविलोकनमसंभाव्यगमनं वेति व्यज्यते । संप्रति नाशितप्रियतम इत्यनेन आर्द्रदुःखत्वं व्यज्यते । सर्वथा प्रियारामेत्यारभ्य एतच्छ्लोकपर्यन्तमनुरागप्रकाशनविशिष्टवचनरूपं पुष्पं नाम संध्यङ्गमुक्तम् ॥ २८ ॥ **भगवानिति** । मत्तः श्रुतं संनिधानं त्वत्सामीप्यं येन सः । मत्त इति रामागमनाख्यातुः दिव्यपुरुषस्यागस्त्यं प्रति गुरुप्रायत्वं

---

१ 'तामच' इति पा० । २ 'भवत्°' इति पा० । ३ °'तविमानावतरण°' इति पा० । ४ '(इतस्तर्हि देवः प्रवर्तयतु पुष्पकं)' इति पठ्यते क्वचित् ।

**शम्बूकः**—देव, पश्य—

गुञ्जत्कुञ्जकुटीरकौशिकघटाघुंकारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चाभिधोऽयं गिरिः ।
एतस्मिन्प्रचलाकिनां प्रचलतामुद्वेजिताः कूजितै-
रुद्वेल्लन्ति पुराणरोहिणतरुस्कन्धेषु कुम्भीनसाः ॥ २९ ॥

अपि च ।

एते ते कुहरेषु गद्गदनदद्गोदावरीवारयो
मेघालम्बितमौलिनीलशिखराः क्षोणीभृतो दाक्षिणाः ।
अन्योन्यप्रतिघातसंकुलचलत्कल्लोलकोलाहलै-
रुत्तालास्त इमे गभीरपयसः पुण्याः सरित्संगमाः ॥ ३० ॥

(इति निष्क्रान्ताः सर्वे ।)

**द्वितीयोऽङ्कः ।**

---

कवेरभिमतमिति व्यज्यते । 'आख्यातोपयोगे' ( १।४।२९ ) इति पञ्चमीविधानात् । **परिकल्पितेति** । आवरणमङ्गलं नीराजनादिकम् । लोपामुद्रा अगस्त्यपत्नी प्रतीक्षते कृतक्षणा तिष्ठति । त्यक्तसर्वव्यापारा तिष्ठतीत्यर्थः । अथ प्रजविना प्रकृष्टवेगवता । एकदेशिनेति ज्ञापनात् कर्मधारयादिनिः ॥ प्रवर्तयन् गमयन् । गुरुजनस्य अगस्त्यस्य आदेशोपरोधात् आज्ञानुसरणाद्धेतोः । अतिक्रमः असंभाव्यगमनरूपः । अत्रेष्टजनानुनयात् पर्युपासनं नाम संध्यङ्गमुक्तम् ॥ **गुञ्जदिति** । कुञ्जा एव कुटीराः गुञ्जन्तः अव्यक्तशब्दवन्तः कुञ्जकुटीराः येषां ते । कौशिकघटाः घूकपङ्क्तयः तासां घुङ्काराः एषु सन्तीति तद्वन्तः कीचकाः तेषां रन्ध्रवतां वेणुविशेषाणां स्तम्बाः काण्डाः तेषामाडम्बरः संभ्रमः तेन मूकानि जोषमासीनानि मौकुलिकुलानि यस्य स तथोक्तः । क्रौञ्चाभिधः तन्नामकोऽयं गिरिः । प्रचलाकिनां मयूराणाम् । रोहिणतरवः हरिचन्दनवृक्षाः । कुम्भीनसाः सर्पाः । उद्वेल्लन्ति वेपन्ते । 'वेल्ल चलने' ॥ २९ ॥ **एत इति** । कुहरेषु गुहासु गद्गदं यथा तथा नदन्ति शब्दवन्ति गोदावरीवारीणि येषु तथोक्ताः । शिखराग्रं मौलिः । पर्वताग्रं शिखरमिति इह भेदः । क्षोणीभृतः पर्वताः । दाक्षिणाः दक्षिणदिशावर्तिनः । एते ते पूर्वं भवता दृष्टाः । अन्योन्यप्रतिघातेन परस्परप्रत्यास्फालनेन संकुला निबिडाः चलन्तः कल्लोलाः तरङ्गाः तेषां कोलाहलैः कलकलैः उत्ताला उल्बणाः सरित्संगमाः नदीसंगमाः ॥ ३० ॥

वाधूलवंशजनुषो भूसारजवीरराघवार्यस्य ।
उत्तररामचरित्रव्याख्यायामवसितो द्वितीयोऽङ्कः ॥

**इति श्रीवाधूलवीरराघवविरचितायां भवभूतिभावतलस्पर्शिनीसमाख्यायामुत्तररामचरितव्याख्यायां द्वितीयोऽङ्कः ।**

---

१ '°घूत्कार°' इति पा० । २ 'क्रौञ्चवतः' इति पा० ।

# उत्तररामचरितम् ।

## तृतीयोऽङ्कः ।

(ततः प्रविशति नदीद्वयम् ।)

**एका**—सखि मुरले, किमसि संभ्रान्तेव ? ।

**मुरला**—सखि तमसे, प्रेषितास्मि भगवतोऽगस्त्यस्य पत्न्या लोपामुद्रया सरिद्वरां गोदावरीमभिधातुम् । जानास्येव यथा वधूपरित्यागात्प्रभृति—

अनिर्भिन्नो गभीरत्वादन्तर्गूढघनव्यथः ।
पुटपाकप्रतीकाशो रामस्य करुणो रसः ॥ १ ॥

तेन च तथाविधेष्टजनकष्टविनिपातजन्मना [1]प्रकृष्टगद्गदेन दीर्घशोकसंतानेन संप्रति[2] परिक्षीणो रामभद्रः । तमवलोक्य कम्पितमिव[3] कुसुमसमबन्धनं मे हृदयम् । अधुना च प्रतिनिवर्तमानेन रामभद्रेण नियतमेव पञ्चवटीवने वधूसहनिवासविस्रम्भसाक्षिणः प्रदेशा द्रष्टव्याः । तत्र च निसर्गधीरस्याप्येवंविधायामवस्थायामतिगम्भीराभोगशोकक्षोभसंवेगात्पदे पदे महाप्र[4]मादानि शोकस्थानानि शङ्कनीयानि रामभद्रस्य । तद्भगवति गोदावरि, त्वया तत्रभवत्या सावधानया भवितव्यम् ।

वीचीवातैः शीकरक्षोदशीतैराकर्षद्भिः पद्मकिञ्जल्कगन्धान् ।
मोहे मोहे रामभद्रस्य जीवं स्वैरं स्वैरं प्रेरितैस्तर्पयेति ॥ २ ॥

---

वधूपरित्यागात् स्नुषापरित्यागात् । **अनिर्भिन्न इति** । करुणो रसः इष्टजनवियोगजन्यदुःखातिशयात्मकरसः पुटपाकप्रतीकाशः लोहादिमयसंपुटान्तर्वर्तिसंतापनसदृश इत्यर्थः ॥ १ ॥ **तेनेति** । तथाविधेष्टजनस्य सीतायाः कष्टविनिपातात् दुःखमयविक्षेपात् जन्म उत्पत्तिः यस्य तथोक्तेन । प्रकृष्टोऽधिकः गद्गदः गद्गदशब्दः येन तथोक्तेन । 'प्रकर्षगद्गदेन' इति पाठे प्रकर्षेण गद्गदो यस्मिन्निति विग्रहः । दीर्घशोकसंतानेन दीर्घदुःखपरिवाहेण परिक्षीणः कार्श्यदौर्बल्यादियुक्तः । कुसुमेन समं बन्धनं यस्येति विग्रहः । कुसुमसमबन्धनम् । तद्वत् सुच्छेदमित्यर्थः । **अधुनेति** । वधूसहनिवासे ये विस्रम्भाः स्वैरलीलाः तत्साक्षिणः तत्साक्षात्कर्तारः प्रदेशाः वनोद्देशाः नियतमित्यसंदेहवाचि । **तत्रेति** । गम्भीरः आभोगः आयामः यस्य तथोक्तः यः शोकः तेन जातस्य क्षोभस्य प्रकृतिविपर्यासस्य संवेगात् वेगातिशयात् । महान् प्रमादः अनवधानता येषु तथोक्तानि । संज्ञाच्छेदकारीणीत्यर्थः । शोकस्थानानि जगतां शोकनिमित्तानि । रामात्याहितानीति भावः । सावधानया अवधानं मनसो विषयान्तरसंचारविमुखता तत्सहितया ॥ **वीचीति** । शीकराणां क्षोदैः सूक्ष्मांशैः । पद्मकि-

---

१ 'प्रकृष्टतां गतेन' इति पा० । २ 'अतितरां' इत्यधिकम् । ३ 'सबन्धनं' इति पा० । ४ '°नि प्रमादस्था°' इति पा० ।

**तमसा**—उचितमेव दाक्षिण्यं स्नेहस्य । संजीवनोपायस्तु मूलत एव रामभद्रस्य संनिहितः ।

**मुरला**—कथमिव ? ।

**तमसा**—तत्सर्वं श्रूयताम् । अस्ति खलु वाल्मीकितपोवनोपकण्ठात्परित्यज्य निवृत्ते लक्ष्मणे सीता देवी प्राप्तप्रसववेदनमतिदुःखसंवेगादात्मानं गङ्गाप्रवाहे निक्षिप्तवती । तदैव तत्र दारकद्वयं च प्रसूता । भगवतीभ्यां पृथ्वीभागीरथीभ्यामप्युभाभ्यामभ्युपपन्ना रसातलं च नीता । स्तन्यत्यागात्परेण दारकद्वयं च तस्य प्राचेतसस्य महर्षेर्गङ्गादेव्या समर्पितं स्वयम् ।

**मुरला**—(सविस्मयम् ।)

ईदृशानां विपाकोऽपि जायते परमाद्भुतः ।
यत्रोपकरणीभावमायात्येवंविधो जनः ॥ ३ ॥

**तमसा**—इदानीं तु शम्बूकवृत्तान्तेनानेन संभावितजनस्थानं रामभद्रं सरयूमुखादुपश्रुत्य भगवती भागीरथी यदेव भगवत्या लोपामुद्रया स्नेहादाशङ्कितं तदेवाभिशङ्क्य सीतासमेता केनचिदिव गृहाचारव्यपदेशेन गोदावरीमुपागता ।[2]

---

ञ्जल्कानां अरविन्दकेसराणां गन्धान् सौरभ्याणि आकर्षद्भिः हरद्भिः । शीकरक्षोदेत्यनेन शैत्यमुक्तम् । पद्मकिञ्जल्कगन्धानित्यनेन सौरभ्यमुक्तम् । आकर्षद्भिरित्यनेन मान्द्यमुक्तम् । वहनाशक्तावेव कर्षणसंभवात् । स्वैरं निःशङ्कम् । अत्र स्वैरमित्युक्त्या सुरभिशीतलमृदुवाता अपि विरहिणामनर्थकारिण इति न शङ्क्यम् । विरहिणां चैतन्यदशायामेव दुःसहा इमे । मूर्च्छितानां तु प्राणप्रतिष्ठापनकरा एव । नातस्त्वयातिशङ्का कर्तव्येति व्यज्यते ॥ २ ॥ **उचितमिति** । दाक्षिण्यं सामर्थ्यं, ऊहापोहात्मकज्ञानवत्त्वं वा । मूलतः सीताङ्कुरात्, मूलमिति सीतोच्यते । मौलिक इति पाठेऽप्यर्थः प्राग्िव । **वाल्मीकीति** । प्राप्तप्रसववेदनं जातप्रसवदुःखम् । आत्मानं स्वम् । दारकद्वयं शिशुद्वयम् । प्रसूता प्रसूतवती । अभ्युपपन्ना संगता । स्तन्यत्यागात्परेण स्तन्यत्यागानन्तरम् ॥ **ईदृशानामिति** । विपाकः दशा । उपकरणीभावमुपकरणत्वम् ॥३॥ **इदानीं त्विति** । उपश्रुत्याकर्ण्य । तत् सर्वं श्रूयतामित्यारभ्य ऋषिश्रेयोवितरणरूपबीजस्य अन्वेषणात् गर्भसंधिरयम् । 'गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः' इत्युक्तेः । केनचिदिव गृहाचारव्यपदेशेनेत्यत्र प्रस्तुतोपयोगिच्छद्माचरणरूपं अभूताहरणं नाम

---

१ '°नागमनं°' इति पा० । २ '° रीं विलोकितुमा°' इति पा० ।

**मुरला**—सुष्ठु चिन्तितं भगवत्या भागीरथ्या । राजनीतिस्थितस्यास्य[1] खलु तैश्च तैश्च जगतामाभ्युदयिकैः कार्यैर्व्यापृतस्य रामभद्रस्य नियताश्चित्तविक्षेपाः । अव्यग्रस्य पुनरस्य शोकमात्रद्वितीयस्य पञ्चवटीप्रवेशो महाननर्थ इति । तत्कथं सीतया रामभद्रोऽयमाश्वासनीयः स्यात् ? ।

**तमसा**—उक्तमत्र भगवत्या भागीरथ्या 'वत्से देवयजनसंभवे सीते, अद्य खल्वायुष्मतोः कुशलवयोर्द्वादशस्य जन्मवत्सरस्य संख्यामङ्गलग्रन्थिरभिवर्तते । तदात्मनः पुराणश्वशुरमेतावतो मानवस्य राजर्षिवंशस्य प्रसवितारं सवितारमपहतपाप्मानं देवं स्वहस्तावचितैः पुष्पैरुपतिष्ठस्व । न त्वामवनिपृष्ठवर्तिनीम[2]स्मत्प्रभावाद्वनदेवता अपि द्रक्ष्यन्ति किमुत मर्त्याः ?' इति । अहमप्याज्ञापिता 'तमसे, त्वयि प्रकृष्टप्रेमैव वधूर्जानकी । अतस्त्वमेवास्याः प्रत्यनन्तरीभव' इति । साहमधुना यथादिष्टमनुतिष्ठामि ।

**मुरला**—अहमप्येतं वृत्तान्तं भगवत्यै लोपामुद्रायै निवेदयामि । रामभद्रोऽप्यागत एवेति तर्कयामि ।

**तमसा**—तदियं गोदावरीह्रदान्निर्गत्य[3]—

परिपाण्डुदुर्बलकपोलसुन्दरं
दधती विलोलकबरीकमाननम् ।
करुणस्य मूर्तिरथवा शरीरिणी
विरहव्यथेव वनमेति जानकी ॥ ४ ॥

---

संध्यङ्गमुक्तम् ॥ **सुष्ठ्विति** । राजनीतिस्थितस्य क्षत्रियोचितराज्यपरिपालनात्मकधर्मनिष्ठस्य । अभ्युदयाय भवन्तीत्याभ्युदयिकानि इति विग्रहः । तैः आभ्युदयिकैः । चित्तविक्षेपाः हृदयतोदाः । अव्यग्रस्य व्यापारान्तरशून्यस्य । अनर्थः तद्दुःखहेतुः । एष तत्त्वार्थानुकीर्तनरूपो मार्ग उक्तः ॥ द्वादशस्य जन्मवत्सरस्य संख्यामङ्गलग्रन्थिरभिवर्तते संख्यापूर्तिहेतुकमङ्गलग्रन्थिः । वत्सरे वत्सरे शिशूनां जन्मनक्षत्रे शान्त्युत्सवं कृत्वा मङ्गलार्थं करे पट्टसूत्रादिना स्त्रियो ग्रन्थिं कुर्वन्ति । स तु करे वलयरूपेण तिष्ठतीत्युपदेशः । मानवस्य मनुसंबन्धिनः । प्रसवितारं जनकम् । अपहतपाप्मानं निरस्तसमस्ताविद्यादिदोषगन्धम् । देवं जगत्सृष्ट्यादिलीलाशालिनम् । अत्र 'एष सर्वेभ्यः पाप्मभ्य उदेति' इत्यन्तरादित्यविद्या प्रत्यभिज्ञापिता । तत्र च कप्यासश्रुत्या नारायण एव प्रतिपाद्य इति स्पष्टमेव । उपतिष्ठस्व सेवस्व । **अत इति** । प्रत्यनन्तरीभव अनुचरीभव ॥ **रामभद्र इति** । तर्कयामि अनुमिनोमि । **परिपाण्ड्विति** । करुणस्य इष्टवियोगजन्यदुःखातिशयस्य मूर्तिः आकारो वा । विरहव्यथा विरहजन्यसंतापा-

---

१ 'राजधानीस्थित°' इति पा० । २ 'चारिणीं' इति पा० । ३ 'निष्क्रम्य' इति पा० ।

मुरला—इयं हि सा

किसलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकमलशोषी दारुणो दीर्घशोकः ।
ग्लपयति परिपाण्डु क्षाममस्याः शरीरं
शरदिज इव घर्मः केतकीगर्भपत्रम् ॥ ५ ॥

( इति परिक्रम्य निष्क्रान्ते । )

इति शुद्धविष्कम्भः ।

( नेपथ्ये । )

जात जात ।

( ततः प्रविशति पुष्पावचयव्यग्रा सकरुणौत्सुक्यमाकर्णयन्ती सीता । )

सीता—*अम्महे, जाणामि पिअसही वासंदी व्याहरदित्ति ।

( पुनर्नेपथ्ये । )

सीतादेव्या स्वकरकलितैः सल्लकीपल्लवाग्रै-
रग्रे लोलः करिकलभको यः पुरा वर्धितोऽभूत् ।

सीता—किं† तस्स ? ।

( पुनर्नेपथ्ये । )

वध्वा सार्धं पयसि विहरन्सोऽहमन्येन दर्पा-
दुद्दामेन द्विरदपतिना संनिपत्याभियुक्तः ॥ ६ ॥

* अहो, जानामि प्रियसखी वासन्ती व्याहरतीति ।
† किं तस्य ? ।

दिरूपा ॥ ४ ॥ **किसलयमिति** । परिपाण्डु उत्करीत्या अतिम्लानत्वेऽपि लावण्याविरोधिपाण्डुतोक्ता । ग्रीष्मविरहतापयोरयमेव विशेषः—यत् ग्रीष्मस्य लावण्यनाशकत्वम्, विरहस्य तु तदभाव इति । तथा च **कालिदासः**—'समस्तापः कामं मनसिजनिदाघप्रसरयोर्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु' इति । एवं सुभगं न, एवं लावण्यापरित्यागेन रमणीयं न भवतीत्यर्थः । तथाह भगवान्वाल्मीकिः—'ज्योत्स्नातुषारमलिना पौर्णमास्यां हि लक्ष्मण । शीतेन चातपश्यामा दृश्यते न च शोभते ॥' इति । ग्रीष्मस्यातपश्यामेति लावण्यनाशकत्वम् । क्षामं कृशं ग्लपयति म्लानं करोति । शरदिजः शरत्कालजः । 'प्रावृट्शरत्-' ( ६।३।१५ ) इत्यादिसूत्रेणालुक् । अत्र लिङ्गादभ्यूहनरूपं अनुमानं नाम संध्यङ्गमुक्तम् ॥ ५ ॥ **शुद्धविष्कम्भ इति** । संस्कृतात्मकविष्कम्भ इत्यर्थः । विष्कम्भस्वरूपं तु-'वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥' इति । केवलसंस्कृतप्रायः शुद्ध इति ॥ व्याहरति वदति ॥ **सीतेति** । स्वकरकलितैः

१ 'कुसुम' इति पा० । २ 'प्रमादः प्रमादः' इत्यत्र पठ्यते ।

**सीता**—(ससंभ्रमं कतिचित्पदानि गत्वा ।) *अज्जउत्त, परित्ताहि परित्ताहि मह तं पुत्तअं । (विचिन्त्य ।) हद्धी हद्धी ! । ताइं एव्व चिरपरिइदाइं अक्खराइं पंचवटीदंसणेण मं मंदभाइणिं अणुबंधंति । हा अज्जउत्त ! (इति मूर्च्छति । )

(प्रविश्य ।)

**तमसा**—समाश्वसिहि समाश्वसिहि ।

(नेपथ्ये ।)

विमानराज, अत्रैव स्थीयताम् ।

**सीता**—(समाश्वस्य,ससाध्वसोल्लासम् ।) †अम्महे, जलभरभरिअमेहमंथरत्थणिअगंभीरमंसलो कुदो णु भारईणिग्घोसो भरंतकण्णविवरं मं वि मंदभाइणिं झत्ति उस्सुआवेइ ! ।

**तमसा**—(सस्मितास्रम् ।) अयि वत्से,

अपरिस्फुटनिक्वाणे कुतस्त्येऽपि त्वमीदृशी ।
स्तनयित्नोर्मयूरीव चकितोत्कण्ठितं स्थिता ॥ ७ ॥[2]

**सीता**—‡भअवदि, किं भणासि अपरिप्फुडेत्ति ? । सरसंजोएण पच्चहिजाणामि णं अज्जउत्तेण एव्व एदं वाहरिदं ।

---

* आर्यपुत्र, परित्रायस्व परित्रायस्व मम तं पुत्रकम् । हा धिक् हा धिक् ! । तान्येव चिरपरिचितान्यक्षराणि पञ्चवटीदर्शनेन मां मन्दभागिनीमनुबध्नन्ति । हा आर्यपुत्र ! ।

† अहो, जलभरभरितमेघमन्थरस्तनितगम्भीरमांसलः कुतो नु भारतीनिर्घोषो भ्रियमाणकर्णविवरां मामपि मन्दभागिनीं झटित्युत्सुकापयति ! ।

‡ भगवति, किं भणस्यपरिस्फुटेति ? । स्वरसंयोगेन प्रत्यभिजानामि नन्वार्यपुत्रेणैवैतद्व्याहृतम् ।

---

स्वकराभ्यां दत्तैरित्यर्थः । वध्वा सार्धं स्त्रिया सह । उद्दामेन उत्कटेन संनिपत्य स्वयमापत्य । अभियुक्तः प्रत्यर्थितया संगतः ॥६॥ **आर्यपुत्रेति** । परित्रायस्वेति । एष ह्यपकारिजनात् भीतिरूप उद्वेग उक्तः । **तानीति** । अक्षराणि आर्यपुत्रेति वर्णाः । **अनुबध्नन्ति** अनुसरन्ति । मन्दभागिनीं अल्पपुण्यफलाम् ॥ **जलेति** । मांसलः स्फीतः । भारतीनिर्घोषः वर्णोच्चारणध्वनिः । उत्सुकापयति उत्कण्ठितां करोति । स्वरसंयोगेन

---

१ 'निस्वाने' इति पा० । २ सप्तमश्लोकस्य टीका नोपलब्धा ।

**तमसा**—श्रूयते तपस्यतः किल शूद्रस्य दण्डधारणार्थमैक्ष्वाको राजा दण्डकारण्यमागत इति ।

**सीता**—दिट्ठिआ* अपरिहीणधम्मो खु सो राआ ।

(नेपथ्ये ।)

यत्र द्रुमा अपि मृगा अपि बन्धवो मे
यानि प्रियासहचरश्चिरमध्यवात्सम् ।
एतानि तानि बहुकन्दरनिर्झराणि
गोदावरीपरिसरस्य गिरेस्तटानि ॥ ८ ॥

**सीता**—(दृष्ट्वा ।) †दिट्ठिआ कहं पहादचंदमंडलापंडरपरिक्खाम-दुब्बलेन आआरेण णिअसोम्हगंभीराणुभावमेत्तपच्चहिजेज्जो एव्व अज्ज-उत्तो होदि ! । भअवदि तमसे, धारेहि मं । (इति तमसामाश्लिष्य मूर्च्छति ।)

**तमसा**—वत्से, समाश्वसिहि समाश्वसिहि ।

(नेपथ्ये ।)

अनेन पञ्चवटीदर्शनेन—

अन्तर्लीनस्य दुःखाग्नेरद्योद्दामं ज्वलिष्यतः ।
उत्पीड इव धूमस्य मोहः प्रागावृणोति माम् ॥ ९ ॥

हा प्रिये जानकि ! ।

---

* दिष्ट्या अपरिहीनधर्मः खलु स राजा ।

† दिष्ट्या कथं प्रभातचन्द्रमडलापाण्डरपरिक्षामदुर्बलेनाकारेण निजसौम्यगम्भीरानुभावमात्रप्रत्यभिज्ञेय एवार्यपुत्रो भवति ! । भगवति तमसे, धारयमाम् ।

---

स्वरसंदर्भेण प्रत्यभिजानामि तदिदमिति वेद्मि । **श्रूयत इति** । तपस्यतः तपश्चरतः । कण्ड्वादिरयम् । दण्डधारणार्थं अपराधानुगुणशिक्षणार्थम् ऐक्ष्वाकः इक्ष्वाकुवंश्यः । 'दाण्डिनायन-' ( ६।४।१७४ ) इत्यादिसूत्रेण टिलोपः ॥ अपरिहीनधर्मः अन्यूनधर्मः ॥ **यत्रेति** । अध्यवात्सम् उषितवानस्मि । 'उपान्वध्याङ्वसः' ( १।४।४८ ) इति कर्मत्वम् । **एतानीति**। गोदावरीपरिसरस्य गोदावरीसमीपवर्तिनः ॥ ८ ॥ परिक्षामदुर्बलेन दुर्बलायमानेन । पाठान्तरम् 'परिक्षामधूसरेण' इति । अतिकृशेन दुर्बलेन चेत्यर्थः ॥ अनुभावमात्रप्रत्यभिज्ञेयः प्रभावेन केवलं प्रत्यभिज्ञातुं शक्यः ॥ **अन्तर्लीनस्येति** । अन्तर्लीनस्य अन्तर्गूढस्य । उद्दामं उल्बणं यथा तथा अद्य ज्वलिष्यतः एतदव्यवहितोत्तरक्षणभा-

---

१ 'जनस्थानं' इति पा० ।

**तमसा**—(स्वगतम् ।) इदं तावदाशङ्कितं[1] गुरुजनेन ।

**सीता**—(समाश्वस्य ।) *हा, कहं एदं ! ।

(पुनर्नेपथ्ये ।)

हा देवि दण्डकारण्यवासप्रियसखि विदेहराजपुत्रि ! । (इति मूर्च्छति ।)

**सीता**—†हद्धी हद्धी ! । मं मंदभाइणिं वाहरिअ ओमीलिदणेत्तणीलुप्पलो[2] मुच्छिदो एव्व । हा, कहं धरणीपिट्ठे णिरुद्धणिस्सासणीसहं विपल्हत्थो ! । भअवदि तमसे, परित्ताएहि परित्ताएहि । जीवावेहि अज्जउत्तं । (इति पादयोः पतति ।)

**तमसा**—

त्वमेव ननु कल्याणि संजीवय जगत्पतिम् ।
प्रियस्पर्शो हि पाणिस्ते तत्रैष निरतो जनः ॥ १० ॥

**सीता**—‡जं होदु तं होदु । जह भअवई आणवेइ । (इति ससंभ्रमं निष्क्रान्ता ।)

---

* हा कथमेतत् ! ।

† हा धिक् हा धिक् ! । मां मन्दभागिनीं व्याहृत्यामीलितनेत्रनीलोत्पलो मूर्च्छित एव । हा, कथं धरणीपृष्ठे निरुद्धनिःश्वासनिःसहं विपर्यस्तः ! । भगवति तमसे, परित्रायस्व परित्रायस्व । जीवयार्यपुत्रम् ।

‡ यद्भवतु तद्भवतु । यथा भगवत्याज्ञापयति ।

---

विज्वलनवतः धूमस्य उत्पीड इव धूमसंबन्धिसंघात इव संमद इवेति वा । मोहः मूर्च्छा प्राक् ज्वलनात् पूर्वम् । आवृणोति संछादयति ॥९॥ **इदमिति** । गुरुजनेन । लोपामुद्राप्रभृतिनेत्यर्थः । एष संचितार्थप्राप्तिरुपक्रम उक्तः ॥ **हेति** । धरणीपृष्ठे भूतले निरुद्धनिःश्वासनिःसहं निरुद्धः प्रवृत्तिहीनः निःश्वासः यस्मिन् कर्मणि तद्यथा भवति तथा निःसहं दुर्बलं विपर्यस्तः ॥ **त्वमेवेति** । 'त्वमेव ननु कल्याणि' इत्यस्यायं भावः । त्वयैवायं संजीवनीय इति चिरंतनी प्रसिद्धिः । 'आनीद वातं स्वधया तदेकम्' इति श्रुत्यायमर्थोऽवगम्यते । एकं जगतां प्रलीनत्वादसहायम् । अतो निर्व्यापारम् । तत् परं ब्रह्म स्वधया 'त्वं सिद्धिस्त्वं स्वधा स्वाहा' इति स्वधाशब्दवाच्यया लक्ष्म्या आनीद जीवत् इति । एवं च अद्य कथमहं वैदेशिकी जीवयामि त्वमेव जीवयेति । अत्र मां मन्दभागिनीमित्यारभ्य परित्रायस्वेत्यन्तसंदर्भेण शङ्कात्रासरूपसंभ्रम उक्तः ॥ १० ॥

---

१ 'तत्' इति पा० । २ 'आमीलंत°' इति पा० ।

(ततः प्रविशति भूम्यां निपतितः सास्रया सीतया स्पृश्यमानः साह्लादोच्छ्वासो रामः।)

**सीता**—(किंचित्सहर्षम्।) *जाणे उण पच्चाअदं विअ जीविअं तेल्लोअस्स।

**रामः**—हन्त भोः, किमेतत्!।

आश्च्योतनं नु हरिचन्दनपल्लवानां
निष्पीडितेन्दुकरकन्दलजो नु सेकः।
[1]आतृप्तजीवितपुनःपरितर्पणोऽयं
संजीवनौषधिरसो हृदि नु प्रसक्तः॥ ११॥

अपि च।

स्पर्शः पुरा परिचितो नियतं स एव
संजीवनश्च मनसः परितोषणश्च।
[2]संतापजः सपदि यः परिहृत्य मूर्च्छा-
मानन्दनेन जडतां पुनरातनोति॥ १२॥

**सीता**—(ससाध्वसकरुणमुपसृत्य।) †एत्तिअं एव्व दाणिं मह बहुदरं।

**रामः**—(उपविश्य।) न खलु वत्सलया देव्याऽभ्युपपन्नोऽस्मि।

**सीता**—‡हद्धी हद्धी!। किं त्ति अज्जउत्तो मं[3] णिंदिस्सदि?।

**रामः**—भवतु, पश्यामि।

---

* जाने पुनः प्रत्यागतमिव जीवितं त्रैलोक्यस्य।

† एतावदेवेदानीं मम बहुतरम्।

‡ हा धिक् हा धिक्!। किमित्यार्यपुत्रो मां निन्दिष्यति?।

---

आह्लाद आनन्दः, उच्छ्वासः श्वाससंचारः, ताभ्यां सहितं यथा तथा॥ **जान इति**। प्रत्यागतं पुनरागतम्। त्रयाणामपि लोकानां राममयजीवितत्वात् रामजीवने तज्जीवनमिति भावः। तदुक्तम्—‘रामो रामो राम इति प्रजानामभवन्कथाः। रामभूतं जगदभूद्रामे राज्यं प्रशासति॥’ इति॥ **आश्च्योतनमिति**। हरिचन्दनपल्लवानां आश्च्योतनं नु कल्पतरुकिसलयक्षरणाद्द्रवीकरणं किम्। कन्दलजः अङ्कुरजः॥ ११॥ **स्पर्श इति**। संजीवनश्च प्राणधारणहेतुभूतश्च परितोषणश्च आह्लादजनकश्च मूर्च्छां प्रज्ञाशून्यतां आनन्दनेन जडतां आनन्दाधिक्यप्रयुक्तप्रज्ञाशून्यतां आतनोति आ समन्तात् विस्तारयति॥ १२॥ एतावदेव मत्स्पर्शे पुरा परिचितत्वकथनमेव। इदानीं वियोगसमये। वत्सलया प्रीतिमत्या मदीयदोषं सहमानया वा। अभ्युपपन्नोऽस्मि अनुगृहीतोऽस्मि। इदं इष्टजनातिसंधानात्मकमतिबलं नाम संध्यङ्गमुक्तम्॥

---

१ ‘आतप्त°’ इति पा०। २ ‘संतापजां’ इति पा०। ३ ‘मग्गिस्सदि’ (=मार्गिष्यते) इति पा०।

**सीता**—*भअवदि तमसे, ओसरम्ह दाव । मं पेक्खिअ अणब्भणुण्णादेण संणिहाणेण राआ अहिअं कुपिस्सदि ।

**तमसा**—अयि वत्से, भागीरथीप्रसादाद्वनदेवतानामप्यदृश्यासि संवृत्ता ।

**सीता**—†अत्थि खु एदं ।

**रामः**—हा प्रिये जानकि ! ।

**सीता**—(ससाध्वसगद्गदम् ।) ‡अज्जउत्त, असरिसं खु एदं इमस्स वुत्तंतस्स । (सास्रम् ।) भअवदि, किं त्ति वज्जमई जम्मंतरेसु वि पुणो वि असंभाविअदुल्लहदंसणस्स मं एव्व मंदभाइणिं उद्दिसिअ एव्वं वच्छलस्स एव्वंवादिणो अज्जउत्तस्स उवरि णिरणुक्कोसा भविस्सं ? । अहं एव्व एदस्स हिअअं जाणामि, मंह[1] एसो ।

**रामः**—(सर्वतोऽवलोक्य सनिर्वेदम् ।) हा ! न किंचिदत्र ।

**सीता**—§भअवदि, णिक्कारणपरिच्चाइणो वि एदस्स एव्वंविधेण दंसणेण कीलिसी[2] मे हिअआवत्था ! ।

* भगवति तमसे, अपसराव तावत् । मां प्रेक्ष्यानभ्यनुज्ञातेन संनिधानेन राजाधिकं कोपिष्यति ।

† अस्ति खल्वेतत् ।

‡ आर्यपुत्र, असदृशं खल्वेतदस्य वृत्तान्तस्य । भगवति, किमिति वज्रमयी जन्मान्तरेष्वपि पुनरप्यसंभावितदुर्लभदर्शनस्य मामेव मन्दभाग्यामुद्दिश्यैवं वत्सलस्यैवंवादिन आर्यपुत्रस्योपरि निरनुक्रोशा भविष्यामि ? । अहमेवैतस्य हृदयं जानामि, ममैषः ।

§ भगवति, निष्कारणपरित्यागिनोऽप्येतस्य दर्शनेनैवंविधेन कीदृशी मे हृदयावस्था ।

अनभ्यनुज्ञातेन अननुमतेन संनिधानेन समीपस्थित्या । **आर्यपुत्रेति** । एतत् प्रियेत्यामन्त्रणम् । अस्य वृत्तान्तस्य । परित्यागरूपस्येत्यर्थः । वज्रमयी अत्यन्तकाठिन्ययुक्ता । मन्दभाग्यां मामुद्दिश्य वत्सलस्य निर्दोषत्वनिश्चयपूर्वकं मयि प्रीतिमतः निरनुक्रोशा निर्दया । अनुक्रोशपदेन रामदशामिमां दृष्ट्वा मुक्तकण्ठं मया रोदितव्यम्—तत् किमेवं कठिना भवामीति व्यज्यते । 'अनुक्रोशति मुक्तकण्ठं रोदित्यनेनेति अनुक्रोशः' इत्यमरव्याख्या । कीदृशी मे हृदयावस्था । आर्यपुत्र, परित्रायस्व मम पुत्रकमित्यारभ्य

१ 'ममावि' इति पा० । २ 'कीदिसो मे हिअआणुबंधो त्ति ण आणामि'(=कीदृश इव मे हृदयानुबन्ध इति न जानामि) इति पा० ।

**तमसा**—जानामि वत्से, जानामि ।

तटस्थं नैराश्यादपि च कलुषं विप्रियवशा-
द्वियोगे दीर्घेऽस्मिन्झटितिघटनात्स्तम्भितमिव ।
प्रसन्नं सौजन्याद्दयितकरुणैर्गाढकरुणं
द्रवीभूतं प्रेम्णा तव हृदयमस्मिन्क्षण इव ॥ १३ ॥

**रामः**—देवि,

प्रसाद इव मूर्तस्ते स्पर्शः स्नेहार्द्रशीतलः ।
अद्याप्यानन्दयति मां त्वं पुनः क्वासि नन्दिनि ॥ १४ ॥

**सीता**—*एदे खु ते अगाधमाणसदंसिदसिणेहसंभारा आणंदणिस्संदिणो सुहामआ अज्जउत्तस्स उल्लावा ! । जाणे[1] पच्चएण णिक्कारणपरिच्चाअसल्लिदो वि बहुमदो मह जम्मलाहो ।

---

* एते खलु तेऽगाधमानसदर्शितस्नेहसंभारा आनन्दनिष्यन्दिनः सुधामया आर्यपुत्रस्योल्लापाः ! । जाने प्रत्ययेन निष्कारणपरित्यागशल्यितोऽपि बहुमतो मम जन्मलाभः ।

---

ममाप्येष इत्यन्तेन संदर्भेण प्रतिपादिता मम हृदयावस्था कीदृशीत्यर्थः ॥ **तटस्थमिति** । तव हृदयं अस्मिन् क्षणे नैराश्यात् तटस्थमिवेत्यादिविभिन्नवाक्यतया योजना । नैराश्यात् प्रत्याशाभावात् । तटस्थं प्रसादकालुष्यादिरहितम् । विप्रियवशात् कलुषं परित्यागरूपादप्रियाद्धेतोः कलुषं क्रोधयुक्तम् । दीर्घे अस्मिन् वियोगे आमरणान्तभावित्वेन ज्ञातेऽस्मिन् विरहे झटितिघटनात् आकस्मिकसंघटनात् स्तम्भितमिव विस्मयस्तिमितमिव सौजन्यात् प्रकृत्या कल्याणत्वात् प्रसन्नं भविष्यतानुसंधानेन निवृत्तकालुष्यम् । दयितकरुणैः रामस्य दुःखात्मकावस्थाविशेषैः गाढकरुणं परदुःखदुःखित्वरूपकरुणासान्द्रम् । प्रेम्णा प्रणयेन द्रवीभूतं विलीनम् । अत्र 'तटस्थं नैराश्यात्' इत्यनेन 'तान्येव चिरपरिचितान्यक्षराणि' इति वाक्याभिमता सीतावस्था प्रतिपादिता । अपि च 'कलुषं विप्रियवशात्' इत्यनेन 'असदृशं खल्वमुष्य वृत्तान्तस्य' इत्येतद्वाक्याभिमतावस्था प्रतिपादिता ।'वियोगे दीर्घेऽस्मिन्' इत्यनेन 'कथं प्रभातचन्द्रमण्डले'त्यादिविवक्षितावस्था प्रतिपादिता । कथमित्यस्य विस्मयार्थकत्वात् । 'प्रसन्नं सौजन्यात्' इत्यनेन अथवा किमिति वज्रमयीवेत्यादिप्रतिपादितावस्था दर्शिता । 'दयितकरुणैर्गाढकरुणम्' इत्यनेन 'हा धिक् इदं मां मन्दभागिनीं व्याहृत्य' इत्यादिवाक्यविवक्षितावस्था प्रतिपादिता । 'द्रवीभूतं प्रेम्णा' इत्यनेन 'उत्सुकयति उत्कण्ठितं स्थितम्' इत्यादिवाक्यप्रतिपादितावस्थोक्ता॥ १३॥ **प्रसाद इति** । स्नेहार्द्रशीतलः स्नेहार्द्रश्चासौ शीतलश्चेति विग्रहः । स्नेहहेतुकत्वात् स्नेहार्द्रत्वम् ॥ १४॥ प्रत्ययेन विश्वासेन । शल्यितोऽपि शल्यवान्कृतोऽपि । 'तस्य संजा-

---

१ 'जाणं' (=येषां) इति पा० ।

**रामः**—अथवा कुतः प्रियतमा ? । नूनं संकल्पाभ्यासपाटवोपादान एष भ्रमो रामभद्रस्य ।

(नेपथ्ये ।)

अहो, महान्प्रमादः प्रमादः । ('सीतादेव्याः स्वकरकलितैः' इत्यर्धं पठ्यते ।)

**रामः**—(सकरुणौत्सुक्यम् ।) किं तस्य ? ।

(पुनर्नेपथ्ये ।)

('वध्वा सार्धं' इत्युत्तरार्धं पठ्यते ।)

**सीता**—*को दाणिं अभिजुज्जइ[1] ? ।

**रामः**—क्वासौ दुरात्मा यः प्रियायाः पुत्रं वधूद्वितीयमभिभवति ? । (इत्युत्तिष्ठति ।)

(प्रविश्य ।)

**वासन्ती**—(संभ्रान्ता ।) देव[2], त्वर्यताम् ।

**सीता**—†हा ! कहं मे पिअसही वासंदी ? ।

**रामः**—कथं देव्याः प्रियसखी वासन्ती ? ।

**वासन्ती**—देव, त्वर्यतां त्वर्यताम् । इतो जटायुशिखरस्य दक्षिणेन सीतातीर्थेन गोदावरीमवतीर्य संभावयतु देव्याः पुत्रकं देवः ।

**सीता**—‡हा ताद जडाओ, सुण्णं तुए विणा इदं जणट्ठाणं ! ।

**रामः**—अहह, हृदयमर्मच्छिदः खल्वमी कथोद्धाताः ! ।

**वासन्ती**—इत इतो देवः ।

**सीता**—§भअवदि, सच्चं एव्व वणदेवदा वि मं ण पेक्खदि ।

---

* क इदानीमभियुज्यते ? ।

† हा ! कथं मे प्रियसखी वासन्ती ? ।

‡ हा तात जटायो, शून्यं त्वया विनेदं जनस्थानम् ! ।

§ भगवति, सत्यमेव वनदेवतापि मां न पश्यति ।

---

तम्' इति सूत्रेणेतच् ॥ **नूनमिति** । संकल्पाभ्यासस्य स्मृतिसंतानस्य पाटवं स्फूर्तिः तदेव उपादानं कारणं यस्य तथोक्तः भ्रमः सीता स्पृष्टवतीत्याकारकान्यथाज्ञानम् ॥ **अहहेति** । हृदयमर्माणि छिन्दन्तीति विग्रहः । कथोद्धाताः पुरावृत्तोपन्यासाः ॥

---

१ 'अहिउजिस्सदि (=अभियोक्ष्यते)' इति पा० । २ 'कथं देवो रघुनन्दनः' इति पा० ।

**तमसा**—अयि वत्से, सर्वदेवताभ्यः प्रकृष्टतममैश्वर्यं मन्दाकिन्याः। तत्किमिति विशङ्कसे?।

**सीता**—*तदो अणुसरम्ह। (इति परिक्रामति।)

**रामः**—भगवति गोदावरि, नमस्ते।

**वासन्ती**—(निरूप्य।) देव, मोदस्व विजयिना वधूद्वितीयेन देव्याः पुत्रकेण!।

**रामः**—विजयतामायुष्मान्!।

**सीता**—†अम्महे, ईदिसो मे पुत्तओ संवुत्तो!।

**रामः**—हा देवि, दिष्ट्या वर्धसे।

येनोद्गच्छद्बिसकिसलयस्निग्धदन्ताङ्कुरेण
 व्याकृष्टस्ते सुतनु लवलीपल्लवः कर्णमूलात्।
सोऽयं पुत्रस्तव मदमुचां वारणानां विजेता
 यत्कल्याणं वयसि तरुणे भाजनं तस्य जातः॥ १५॥

**सीता**—‡अविउत्तो दाणिं दीहाऊ इमाए सोम्हतादंसणाए होदु।

**रामः**—सखि वासन्ति, पश्य पश्य। कान्तानुवृत्तिचातुर्यमपि शिक्षितं वत्सेन।

लीलोत्खातमृणालकाण्डकवलच्छेदेषु संपादिताः
 पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
 र्यत्स्नेहादनरालमालनलिनीपत्रातपत्रं धृतम्॥ १६॥

---

* ततोऽनुसरावः।

† अहो, ईदृशो मे पुत्रकः संवृत्तः!।

‡ अवियुक्त इदानीं दीर्घायुरनया सौम्यदर्शनया भवतु।

---

**अयीति**। प्रकृष्टमुत्कृष्टम्। अत्र प्रस्तुतोत्कर्षाभिधानरूपोदाहृतिरुक्ता॥ **येनेति**। तरुणे वयसि यत् कल्याणं अङ्गनापरिष्वङ्गरूपं मङ्गलं तस्य भाजनं पात्रं जातः॥ १५॥ **लीलेति**। लीलया उत्खाता उद्धृताः मृणालकाण्डा एव कवलाः ग्रासाः तेषां छेदेषु अवसानेषु पुष्यद्भिः वर्धमानैः पुष्करैः पद्मैः वासितस्य सुरभितस्य पयसः जलस्य गण्डूषसंक्रान्तयः पयःसंबन्धिगण्डूषसंक्रमणानि संपादिताः निर्व्यूढाः। अथवा पुष्यति

**सीता**—*भअवदि तमसे, अअं दाव ईरिसो जादो । दे उण ण आणामि एत्तिएण कालेण कुसलवा कीरिसा संवुत्तेत्ति ।

**तमसा**—यादृशोऽयं तादृशौ तावपि ।

**सीता**—†ईरिसम्हि मंदभाइणी जाए ण केवलं अज्जउत्तविरहो पुत्तविरहो वि ! ।

**तमसा**—भवितव्यतेयमीदृशी ।

**सीता**—‡किंवा मए पसूदाए जेण एँआरिसं मह पुत्तआणं ईसिविरलधवलदसणकुम्हलुज्जलं अणुबद्धमुद्धकाअलीविहसिदं णिच्चुज्जलं महपुंडरीअजुअलं ण परिचुंबिअं अज्जउत्तेण ।

**तमसा**—अस्तु देवताप्रसादात् ।

**सीता**—§भअवदि तमसे, एदिणा अवच्चसंसुमरणेण उस्ससिदपण्हुदत्थणी दाणिं वच्चाणं पिदुणो संणिहाणेण खणमेत्तं संसारिणी संवुत्तम्हि ।

**तमसा**—किमत्रोच्यते ? । प्रसवः खलु प्रकृष्टपर्यन्तः स्नेहस्य । परं चैतदन्योन्यसंश्लेषणं पित्रोः ।

---

* भगवति तमसे, अयं तावदीदृशो जातः । तौ पुनर्न जानाम्येतावता कालेन कुशलवौ कीदृशौ संवृत्ताविति ।

† ईदृश्यस्मि मन्दभागिनी यस्या न केवलमार्यपुत्रविरहः पुत्रविरहोऽपि ! ।

‡ किंवा मया प्रसूतया येनैतादृशं मम पुत्रकयोरीषद्विरलधवलदशनकुड्मलोज्ज्वलमनुबद्धमुग्धकाकलीविहसितं नित्योज्ज्वलं मुखपुण्डरीकयुगलं न परिचुम्बितमार्यपुत्रेण ।

§ भगवति तमसे, एतेनापत्यसंस्मरणेनोच्छ्वसितप्रस्नुतस्तनी इदानीं वत्सयोः पितुः संनिधानेन क्षणमात्रं संसारिणी संवृत्तास्मि ।

---

उपचयवति पुष्करे शुण्डाग्रे वासितस्य संजातवासस्य पयसः जलस्य गण्डूषसंक्रान्तयः । लीलोत्खातमृणालकाण्डरूपकवलच्छेदेषु कवलार्धखण्डेषु अधिकरणे सप्तमी । संपादिताः निर्व्यूढाः । तत्र हि 'अच्छिद्राणि भूयांसि' इति भावः । अनरालं अवक्रम् ॥१६॥ अनुबद्धमुग्धकाकलीविहसितं उत्पन्नसूक्ष्ममधुरास्फुटध्वनिमुग्धस्मितम् ॥ देवताप्रसादाद्देवतानुग्रहात् ॥ **प्रसव इति** । पर्यन्तः परा कोटिः । अन्योन्यसंश्लेषणं अविना-

---

१ 'तारिसंपि' इति पा० ।

अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति पठ्यते ॥ १७ ॥

**वासन्ती**—इतोऽपि देवः पश्यतु ।

अनुदिवसमवर्धयत्प्रिया ते
यमचिरनिर्गतमुग्धलोलबर्हम् ।
मणिमुकुट इवोच्छिखः कदम्बे
नदति स एष वधूसखः शिखण्डी ॥ १८ ॥

**सीता**—(सकौतुकस्नेहास्रम् ।) *एसो सो ।

**रामः**—मोदस्व वत्स ! । वयमद्य वर्धामहे ।

**सीता**—†एव्वं होदु ।

**रामः**—

भ्रमिषु कृतपुटान्तर्मण्डलावृत्तिचक्षुः-
प्रचलितचटुलभ्रूताण्डवैर्मण्डयन्त्या ।
करकिसलयतालैर्मुग्धया नर्त्यमानं
सुतमिव मनसा त्वां वत्सलेन स्मरामि ॥ १९ ॥

---

* एष सः ।
† एवं भवतु ।

---

भावहेतुभूतम् । तदुभयमपीत्याह—**अन्तःकरणेति** । दम्पत्योः जायापत्योः अन्तःकरणतत्त्वस्य हृदयवस्तुनः स्नेहसंश्रयात् । स्नेहः प्रीतिः संश्रयः संश्रयणम् । अविश्लेष इति यावत् । स्नेहश्च संश्रयश्चेति समाहारद्वन्द्वः । तस्मान्निमित्तादित्यर्थः । अन्नाद्धेतोर्वसतीत्यत्र अन्नफलको वास इति बोधः । तद्वदत्रापि स्नेहसंश्रयणफलकानन्दग्रन्थिरिति । आनन्दग्रन्थिः आनन्दमयग्रन्थिः । आनन्दपदेन ग्रन्थ्यन्तरव्यावृत्तिः । अपत्यमिति पठ्यते परिभाष्यते ॥ १७ ॥ **अनुदिवसमिति** । अचिरनिर्गतमुग्धलोलबर्हं प्रत्यग्रोत्पन्नसुन्दरचलत्पिच्छं यं अवर्धयत् स एष शिखण्डी वधूसखः सन् कदम्बे वृक्षे मणिमुकुट इव । आनुपूर्व्यात् पृथुकृशत्वात् नानावर्णत्वाच्च रत्नमयकिरीटसादृश्यम् । नदति केकां करोति ॥ १८ ॥ **भ्रमिष्विति** । मण्डलं यथा भवति तथा आवृत्तिः मण्डलावृत्तिः । पुटे अन्तः पुटान्तः । पुटान्तः मण्डलावृत्तिः पुटान्तमण्डलावृत्तिः । भ्रमिषु भ्रमणेषु । मयूरस्य मण्डलाकारनाट्यचारिष्विति यावत् । कृता रचिता पुटान्तर्मण्डलवृत्तिर्ययोस्तथोक्ते चक्षुषी यैस्तथोक्तानि कृतपुटान्तर्मण्डलावृत्तिचक्षूंषि । प्रचलितयोः चटुलयोः सुन्दरयोः भ्रुवोः ताण्डवानि नर्तनानि कृतपुटान्तर्मण्डलावृत्तिचक्षूंषि च तानि प्रचलितचटुलभ्रूताण्डवानि चेति विग्रहः । तैः । तदुक्तं **कनककविना**—'किं चाधस्तादुपरि च नयन्त्यानतो

हन्त, तिर्यञ्चोऽपि परिचयमनुरुन्धन्ते ! ।

कतिपयकुसुमोद्गमः कदम्बः
प्रियतमया परिवर्धितोऽयमासीत् ।

**सीता**—(सास्रम् ।) *सुट्ठु पच्चहिजाणिदं अज्जउत्तेण ।

**रामः**—

स्मरति गिरिमयूर एष देव्याः
स्वजन इवात्र यतः प्रमोदमेति ॥ २० ॥

**वासन्ती**—अत्र तावदासनपरिग्रहं करोतु देवः ।

( राम उपविशति । )

**वासन्ती**—

नीरन्ध्रबालकदलीवनमध्यवर्ति
कान्तासखस्य शयनीयशिलातलं ते ।
अत्र स्थिता तृणमदा[१]द्बनगोचरेभ्यः
सीता ततो हरिणकैर्न विमुच्यते स्म ॥ २१ ॥

**रामः**—इदं तावदशक्यमेव द्रष्टुम् । (इत्यन्यतो रुदन्नुपविशति ।)

**सीता**—†सहि वासंदि, किं तुए किदं अज्जउत्तस्स मह अ एदं दंसअंतीए ? । हद्धी हद्धी ! । सो एव्व अज्जउत्तो । तं एव्व पंचवडीवणं । सा एव्व पिअसही वासंदी । दे एव्व विविहविस्सम्भसक्खिणो गोदावरीकाणणुद्देसा । दे एव्व जादणिव्विसेसा मिअपक्खिणो पाअवा अ ।

* सुष्ठु प्रत्यभिज्ञातमार्यपुत्रेण ।

† सखि वासन्ति, किं त्वया कृतमार्यपुत्रस्य मम चैतद्दर्शयन्त्या ? । हा धिक् हा धिक् ! । स एवार्यपुत्रः । तदेव पञ्चवटीवनम् । सैव प्रियसखी वासन्ती । त एव विविधविस्रम्भसाक्षिणो गोदावरीकाननोद्देशाः । त एव जातनिर्विशेषा

न्निद्रपक्ष्मा चक्राकारं भ्रमयति मुहुर्विश्वमावर्तयन्ती' इति । करकिसलयतालैः करसंघट्टनजाततालध्वनिभिः । जातिभेदाभिप्रायकं बहुवचनम् । वत्सलेन सस्नेहेन ॥ १९ ॥ अनुरुन्धन्ते अनुसरन्ति । **कतिपय इति** । कतिपयकुसुमानामुद्गम उत्पत्तिः यस्मिन्निति विग्रहः । **स्मरतीति** । एष गिरिमयूरः गिरिप्रियो मयूरः गिरिमयूरः । शाकपार्थिववत्समासः । गिरेः प्रियत्वं उन्नतत्वनिरुपप्लवत्वादिना । अत्र अस्मिन् प्रियतमापरिवर्धितकदम्बवृक्षे स्वजन इव स्वबन्धुविषय इव यतः यस्मात्कारणात् प्रमोदं प्रीतिं एति

१ 'बहुशो यदेभ्यः' इति पा० ।

मह उण मंदभाइणीए दीसंतं वि सव्वं एव्व एदं णत्थि ! । ईरिसो जीवलोअस्स परिणामो संवुत्तो ! ।

**वासन्ती**—सखि सीते, कथं न पश्यसि रामभद्रस्यावस्थाम्? ।

नवकुवलयस्निग्धैरङ्गैर्ददन्नयनोत्सवं
सततमपि नः स्वेच्छादृश्यो नवो नव एव सः[१] ।
विकलकरणः पाण्डुच्छायः शुचा परिदुर्बलः
कथमपि स इत्युन्नेतव्यस्तथापि दृशोः प्रियः ॥ २२ ॥

**सीता**—*सहि, पेक्खामि ।

**तमसा**—[२]पश्य प्रियं भूयः ।

**सीता**—†हा देव्व, एसो मए विणा अहं वि एदेण विणेति केण संभाविदं आसि ! । ता मुहुत्तमेत्तं जम्मंतरादो वि दुल्लहलद्धदंसणं[३] बाहसलिलंतरेषु पेक्खामि दाव वच्चलं अज्जउत्तं । (इति पश्यन्ती स्थिता ।)

**तमसा**—(परिष्वज्य सास्रम् ।)

विलुलितमतिपूरैर्बाष्पमानन्दशोक-
प्रभवमवसृजन्ती पक्ष्मलोत्तानदीर्घा ।
स्नपयति हृदयेशं स्नेहनिष्यन्दिनी ते
धवलमधुरमुग्धा दुग्धकुल्येव दृष्टिः ॥ २३ ॥

---

मृगपक्षिणः पादपाश्च । मम पुनर्मन्दभाग्याया दृश्यमानमपि सर्वमेवैतन्नास्ति ! । ईदृशो जीवलोकस्य परिणामः संवृत्तः ! ।

* सखि, पश्यामि ।

† हा दैव, एष मया विना अहमप्येतेन विनेति केन संभावितमासीत् ! । तन्मुहूर्तमात्रं जन्मान्तरादपि दुर्लभलब्धदर्शनं बाष्पसलिलान्तरेषु पश्यामि तावद्वत्सलमार्यपुत्रम् ।

---

प्राप्नोति । तस्मादेष देव्याः स्मरति । सीतां स्मरतीत्यर्थः ॥ २० ॥ २१ ॥ **नवेति ।** विकलकरणः शून्यचक्षुरादिकरणः शुचा दुःखेन परिदुर्बलः स्वधारणेऽप्यसमर्थः । बलं हि धारणसामर्थ्यम् । उन्नेतव्यः अनुमेयः । तथापि दृशोः प्रियः । अनुपहतलावण्यकलादिति भावः ॥२२॥ **हा इति ।** केन संभावितमासीत् केन हेतुना संभावितं उत्पादितम् । त्वयेति शेषः । दुर्लभलब्धदर्शनं यदृच्छया लब्धदर्शनमिति व्याख्यातारः ॥ **विलुलितमिति ।** 'विलुठितम्' इति पाठान्तरम् । अतिपूरैः अतिशयितस्रोतोभिः विलुलितं विकीर्णं आनन्दशोकप्रभवं आनन्दशोकहेतुकं बाष्पं अश्रु अवसृजन्ती उत्पादयन्ती । पक्ष्मला च

---

१ 'यः' इति पा० । २ 'पश्यन्ती प्रियं भूयाः' इति पा० । ३ 'विअ लद्धदंसणं' (=इव लब्धदर्शनं ) इति पा० ।

**वासन्ती**—

दददु तरवः पुष्पैरर्घ्यं फलैश्च मधुश्च्युतः
स्फुटितकमलामोदप्रायाः प्रवान्तु वनानिलाः ।
कलमविरलं रज्यत्कण्ठाः क्वणन्तु शकुन्तयः
पुनरिदमयं देवो रामः स्वयं वनमागतः ॥ २४ ॥

**रामः**—एहि सखि वासन्ति, नन्वितः स्थीयताम् ।

**वासन्ती**—(उपविश्य सास्रम् ।) महाराज, अपि कुशलं कुमारलक्ष्मणस्य ? ।

**रामः**—(अनाकर्णनमभिनीय ।)

करकमलवितीर्णैरम्बुनीवारशष्पै-
स्तरुशकुनिकुरङ्गान्मैथिली यानपुष्यत् ।
भवति मम विकारस्तेषु दृष्टेषु कोऽपि
द्रव इव हृदयस्य प्रस्रवोद्भेदयोग्यः[१] ॥ २५ ॥

**वासन्ती**—महाराज, ननु पृच्छामि अपि कुशलं कुमारलक्ष्मणस्येति ।

**रामः**—(आत्मगतम् ।) अये, महाराजेति निष्प्रणयमामन्त्रणपदम् ।

---

सा उत्ताना च सा दीर्घा च इति विग्रहे विशेषणसमासः । उत्तानविपुला । स्नेहस्य अनुरागस्य निष्यन्दः यस्यामस्तीति विग्रहः । दुग्धकुल्येव सुधामयकृत्रिमाल्पसरिदिव स्नपयति स्नानं करोति । आदन्तत्वात् पुगागमे 'ग्लास्नावनुमां च' इति वैकल्पिको ह्रस्वः ॥२३॥ **दददित्विति** । मधूनि मकरन्दानि श्च्योतयन्ति क्षरन्तीति विग्रहः । 'श्चुतिर् क्षरणे' इत्यस्मादन्तर्भावितण्यर्थात् कर्तरि क्विप्प्रत्ययः । यद्वा मधुभिः मकरन्दैः श्च्योतन्ति आर्द्रीकुर्वन्तीति विग्रहः । 'श्च्युतिर् आसेचने' इत्यस्मात् क्विप् । इदं च वनानिलानां विशेषणम् । तृतीयान्तपाठे फलविशेषणं पुष्पविशेषणं वा । 'च्यु च्यवने' इत्यस्मात् भावे क्तप्रत्यये मधूनां च्युतं च्यवनं येभ्य इति पुष्पपक्षे, फलपक्षे तु कर्मणि क्तप्रत्ययेन मधुभ्यः च्युतैरिति पञ्चमीतत्पुरुषः । पुष्परससमृद्धौ तात्पर्यम् । तदेवं पक्षत्रये—आद्यः शकारचकाराभ्यां युक्तः पाठः।द्वितीयः शकारचकारयकारैर्युक्तः।तृतीयस्तु चकारयकाराभ्यामिति विवेकः । रज्यत्कण्ठाः रागयुक्तकण्ठाः क्वणन्तु गीतवाद्यभेदेन शब्दं कुर्वन्तु । अत एव कूजन्त्विति नोक्तम् ॥२४॥ आकर्णनं अनाकर्णनाभावम् । **करकमलेति** । करकमलवितीर्णैः करकमलदत्तैः अम्बुनीवारशष्पैः नीवारो धान्यविशेषः । शष्पं बालतृणं तैः अपुष्यत् अवर्धयत् । अत्राम्बुना तरून्, अम्बुनीवाराभ्यां शकुनीन् अम्बुनीवारशष्पैः कुरङ्गानिति विवेकः । तेषु दृष्टेषु सत्सु प्रस्रवोद्भेदयोग्यः प्रसरणोत्पत्तियोग्यः द्रव इव कोऽपि विकारः मम हृदयस्य भवति उत्पद्यते ॥२५॥ महाराजेत्यामन्त्रणपदं संबोधनशब्दः ॥

---

१ 'प्रस्तरोद्भेदयोग्यः' इति पा० ।

सौमित्रिमात्रके बाष्पस्खलिताक्षरः कुशलप्रश्नः । तथा मन्ये विदितसीतावृत्तान्तेयमिति । (प्रकाशम् ।) आः, कुशलं कुमारलक्ष्मणस्य ।

**वासन्ती**—(रुदति ।) अयि देव किं, परं दारुणः खल्वसि ।

**सीता**—*सहि वासंदि, किं तुमं एव्वंवादिणी होसि ? । पूंआरुहो सव्वस्स अज्जउत्तो विसेसदो मह पिअसहीए ।

**वासन्ती**—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किंमतः परेण ॥ २६ ॥

(इति मुह्यति ।)

**तमसा**—स्थाने वाक्यनिवृत्तिर्मोहश्च ।

**रामः**—सखि, समाश्वसिहि समाश्वसिहि ।

**वासन्ती**—(समाश्वस्य ।) तत्किमिदमकार्यमनुष्ठितं देवेन ? ।

**सीता**—†सहि वासंदि, विरम विरम ।

**रामः**—लोको न मृष्यतीति ।

**वासन्ती**—कस्य हेतोः ? ।

---

* सखि वासन्ति, किं त्वमेवंवादिनी भवसि ? । पूजार्हः सर्वस्यार्यपुत्रो विशेषतो मम प्रियसख्याः ।

† सखि वासन्ति, विरम विरम ।

---

आः इति सोपालम्भाङ्गीकारे ॥ **त्वमिति**। त्वं जीवितं प्राणाः । त्वं मे द्वितीयं हृदयमसि । त्वं नयनयोः कौमुदी तद्वदानन्दिनी । 'कौमोदन्ते जना यस्मात्तेनेयं कौमुदी मता' इति कौमुदीपदनिरुक्तेः । त्वमङ्गे विषये अमृतं पीयूषम् । तद्वज्जराप्रतिबन्धेन नित्ययौवनावहेत्यर्थः । अत्र प्राणाः प्राणा एव, हृदयं हृदयमेव, कौमुदी कौमुद्येव, अमृतं अमृतमेव । त्वं तु प्राणा हृदयं कौमुद्यमृतमेतत् सर्वमिति प्राणाद्यपेक्षया वैलक्षण्यमपि सूच्यते । देवतायाः स्वस्या अपि ज्ञातुं वक्तुं चाशक्यत्वादाह—**इत्यादिभिरिति** । प्रियाणां प्रियवचनानां शतैः । अनन्तवाची शतशब्दः । 'शतं सहस्रमयुतं सर्वमानन्त्यवाचकम्' इत्युक्तेः।मुग्धां अनुरुध्य । 'उदययौवना मुग्धा' इति लक्षणलक्षितां सुन्दरीम् । त्वत्क्रौर्यमजानन्तीमिति वार्थः । अनुरुध्य अनुनीय तामेव पूर्वोक्तानुनयविषयभूतामेवात्र कथं त्यक्तवानसि । नाशितवानसीति वा । वाक्यशेषस्य दुःखातिशयेन वक्तुमशक्यतया प्रकरणाद्यनुग्रहेणा-

---

१ 'पिआरुहो' (=प्रियार्हो ) इति पा० । २ 'किमिहोत्तरेण' इति पा० ।

रामः—स एव जानाति किमपि ।

तमसा—चिरादुपालम्भः ।

वासन्ती—

अयि कठोरयशः किल ते प्रियं
किमयशो ननु घोरमतः परम् ।
किमभवद्विपिने हरिणीदृशः
कथय नाथ कथं बत मन्यसे ॥ २७ ॥

सीता—सहि* वासंदि, तुमं एव्व दारुणा कठोरा अ । जा एव्वं[1] पलवंतं पलावेसि ।

तमसा—प्रणय एवं व्याहरति शोकश्च ।

रामः—सखि, किमत्र मन्तव्यम्? ।

त्रस्तैकहायनकुरङ्गविलोलदृष्टे-
स्तस्याः परिस्फुरितगर्भभरालसायाः ।
ज्योत्स्नामयीव मृदुबालमृणालकल्पा
क्रव्याद्भिरङ्गलतिका नियतं विलुप्ता ॥ २८ ॥

सीता—†अज्जउत्त, धरामि एसा धरामि ।

रामः—हा प्रिये जानकि, क्वासि? ।

सीता—‡हद्धी हद्धी! । अण्णो विअ अज्जउत्तो पमुक्ककंठं पेरुण्णो[2] होदि ।

तमसा—वत्से, सांप्रतिकमेवैतत् । कर्तव्यानि खलु दुःखितैर्दुःखनिर्धारणानि[3] ।

* सखि वासन्ति, त्वमेव दारुणा कठोरा च । यैवं प्रलपन्तं प्रलापयसि ।

† आर्यपुत्र, धराम्येषा धरामि ।

‡ हा धिक् हा धिक्! । अन्य इवार्यपुत्रः प्रमुक्तकण्ठं प्ररुदितो भवति ।

र्थाध्याहारवादे विवक्षितार्थलाभासंभवात् शब्दाध्याहारवादे तस्य सुलभत्वात् प्रयोगे हेतुभूततत्स्मरणेन मूर्च्छोत्पत्तेश्चाह—**मुह्यतीति**। अथवेति पूर्वोक्ताक्षेपे। शान्तं त्वामुपलभ्यालम् । अतः परेण किम्? । अतिक्रान्तत्वादिति भावः ॥२६॥२७॥ **त्रस्तेति** । ज्योत्स्नामयीव ज्योत्स्नाविकृतिरिव स्थिता क्रव्याद्भिः विलुप्ता नाशितेति भावः। नियतमिति संभावनायाम् । अत्र प्रकरणे उपायापायशङ्काभ्यां कार्यसंभवरूपप्राप्त्याशा प्रतिपादिता

१ 'अज्जउत्तं पलित्तं पदीवेसि' इति पा० । २ 'रोइदि' इति पा० । ३ '°निर्वापणानि' इति पा० ।

पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया ।
शोकक्षोभे च हृदयं प्रलापैरेवधार्यते[1] ॥ २९ ॥

विशेषतो रामभद्रस्य बहुप्रकारकष्टो जीवलोकः ।

इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोकं जीवं कुसुममिव घर्मो ग्लपयति ।
स्वयं कृत्वा त्यागं विलपनविनोदोऽप्यसुलभ-
स्तदद्याप्युच्छ्वासो भवति ननु लाभो हि रुदितम् ॥ ३० ॥

**रामः**—कष्टं भोः, कष्टम् ! ।

दलति हृदयं शोकोद्वेगाद्[2] द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसा-
त्प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥३१ ॥

हे भगवन्तः पौरजानपदाः,

न किल भवतां देव्याः स्थानं गृहेऽभिमतं तत-
स्तृणमिव वने शून्ये त्यक्ता न चाप्यनुशोचिता ।
चिरपरिचितास्ते ते भावास्[3] तथा द्रवयन्ति मा-
मिदमशरणैरद्यास्माभिः प्रसीदत रुद्यते ॥ ३२ ॥

**वासन्ती**—(स्वगतम् ।) अतिगभीरमापूरणं मन्युभारस्य । (प्रकाशम् ।) देव, अतिक्रान्ते धैर्यमवलम्ब्यताम् ।

**रामः**—[4] किमुच्यते धैर्यमिति ! ।

॥२८॥ अन्य इव पृथग्जन इव । **पूरोत्पीड इति** । पूरोत्पीडे स्रोतोभूयस्त्वे । परीवाहः जलनिःसारणम् । प्रतिक्रिया प्रतीकारः चिकित्सा । शोकक्षोभे शोकाधिक्यप्रयुक्तप्रकृतिविपर्यासे । प्रलापैः परिदेवनैः ॥२९॥ बहुप्रकाराणि कष्टानि बहुविधानि दुःखानि यस्मिन् तथोक्तः । **इदमिति** । अभियुक्तेन तत्परेण विधिवत् यथाशास्त्रं विलपनं चासौ विनोदश्चेति विग्रहः । उच्छ्वासः प्राणधारणम् ॥३०॥ **दलतीति** । दलति स्फुटति । द्विधा न भिद्यते । पृथक्कारेण शकलद्वयं न भवतीत्यर्थः । न कृन्तति न छिनत्ति ॥३१॥ **न किलेति** । देव्याः सीताया गृहे स्थानं गृहस्थितिः न चाप्यनुशोचिता । तत्परित्यागहेतुकशोकोऽपि युष्माकं नेति भावः । भावा अभिप्रायाः । तथा द्रवयन्ति वाचामगोचरं यथा तथा विलापयन्ति । 'परिद्रवयन्ति' इत्यपि पाठः । रुद्यते रोदनं करोमि । भावे लट् । प्रसीदत प्रसादं कुरुत ॥ ३२ ॥ मन्युभारस्य कोपातिशयस्य आपूरणमाविष्करणम् ।

१ 'एव धार्यते' इति पा० । २ 'गाढोद्वेगं' इति पा० । ३ 'भावाः परि°' इति पा० । ४ 'सखि' इत्यधिकं क्वचित् ।

देव्या शून्यस्य जगतो द्वादशः परिवत्सरः ।
प्रनष्टमिव नामापि न च रामो न जीवति ॥ ३३ ॥

**सीता**—ओहरामि* अ मोहिआ विअ एदेहिं अज्जउत्तस्स पिअवअणेहिं ।[1]

**तमसा**—एवमेव वत्से,

नैताः प्रियतमा वाचः स्नेहार्द्राः शोकदारुणाः ।
एतास्ता मधुनो धाराः श्च्योतन्ति सविषास्त्वयि ॥ ३४ ॥

**रामः**—अयि वासन्ति, मया खलु

यथा तिरश्चीनमलातशल्यं
प्रत्युप्तमन्तः सविषश्च दन्तः ।[2]
तथैव तीव्रो हृदि शोकशङ्कु-
र्मर्माणि कृन्तन्नपि किं न सोढः ॥ ३५ ॥

**सीता**—एव्वं[3]† वि मंदभाइणी अहं जा पुणो आआसआरिणी अज्जउत्तस्स ।

**रामः**—एवमतिगूढ[4]स्तम्भितान्तःकरणस्यापि मम संस्तुत[5]वस्तुदर्शना-द[6]यमावेगः । तथाहि—

वेलोल्लोलक्षुभितकरुणोज्जृम्भणस्तम्भनार्थं
यो यो यत्नः कथमपि समाधीयते[7] तं तमन्तः ।

* अपहरामि च मोहितेव एतैरार्यपुत्रस्य प्रियवचनैः ।

† एवमपि मन्दभागिन्यहं या पुनरायासकारिणी आर्यपुत्रस्य ।

अतिगभीरमतिगूढम् । अवलम्ब्यतां आश्रीयताम् । त्वयेति शेषः ॥ **देव्या इति ।** द्वादशानां पूरणो द्वादशः । 'तस्य पूरणे डट्' । परिवत्सरः संवत्सरः । रामः न जीवतीति न । जीवत्येवेत्यर्थः । जीवनाभावो न्याय्य इति व्यज्यते ॥ ३३ ॥ **नैता इति ।** प्रियतमा इष्टतमाः स्नेहार्द्रा अनुरागशीतलाः शोकदारुणाः दुःखेन रूक्षा एता वाचः न । किंतु एताः सविषा मधुनो धाराः श्च्योतन्ति स्रवन्ति । अत्रापह्नुतिरलंकारः ॥ ३४ ॥ **यथेति ।** तिरश्चीनं तिर्यग्भूतं प्रत्युप्तं निखातं अलातशल्यं उल्कामयं लोहकीलाग्रं सविषो दन्तश्च यथा तीव्रः तथैव तीव्रः मर्माणि हृदयादीनि कृन्तन्सन्नपि छिन्दन्सन्नपि हृदि शोकशङ्कुः दुःखात्मककीलं किं न सोढः न व्यषहत किम् ? । सहतेः कर्मणि क्तः ॥ ३५ ॥ **वेलेति ।** वेलायाः मर्यादायाः उल्लोल उद्गतः । अतिवेल इत्यर्थः । क्षुभितः प्रवाहभूयस्तया नदीवत् क्षोभवांश्च यः करुणः प्रियजनविश्लेषजन्यदुःखातिशयः तस्य

१ 'मोहिदम्हि एदेहिं अज्जउत्तवअणेहिं' इत्यपि पाठोऽत्र । २ 'दंशः' इति पा० । ३ 'एव्वं म्हि' इति पा० । ४ 'अतिनिष्कम्प°' इति पा० । ५ 'तत्तत्प्रिय°' इत्यधिकमत्र क्वचित् । ६ 'उद्दामोयं' इति पा० । ७ 'मया धी°' इति पा० ।

भित्त्वा भित्त्वा प्रसरति बलात्कोऽपि चेतोविकार-
स्तोयस्येवाप्रतिहतरयः सैकतं सेतुमोघः ॥ ३६ ॥

**सीता**—*अज्जउत्तस्स एदिणा दुव्वारदारुणारंभेण दुःखसंजोएण[1] परिमुसिअणिअदुक्खं पमुक्कजीविअं[2] मे हिअअं फुडइ ।

**वासन्ती**—(स्वगतम् ।) कष्टमत्यासक्तो[3] देवः ! । तदाक्षिपामि[4] तावत् । (प्रकाशम् ।) चिरपरिचितानिदानीं जनस्थानाभोगानवलोकनेन मानयतु देवः ।

**रामः**—एवमस्तु । (इत्युत्थाय परिक्रामति ।)

**सीता**—संदीवणं† एव्व दुक्खस्स पिअसहीए विणोदणोवाओ त्ति तक्केमि ।

**वासन्ती**—देव देव,

अस्मिन्नेव लतागृहे त्वमभवस्तन्मार्गदत्तेक्षणः
सा हंसैः कृतकौतुका चिरमभूद्गोदावरीसैकते ।
आयान्त्या परिदुर्मनायितमिव त्वां वीक्ष्य बद्धस्तया
कातर्यादरविन्दकुड्मलनिभो मुग्धः प्रणामाञ्जलिः ॥ ३७ ॥

---

* आर्यपुत्रस्यैतेन दुर्वारदारुणारम्भेण दुःखसंयोगेन परिमुषितनिजदुःखं प्रमुक्तजीवितं मे हृदयं स्फुटति ।

† संदीपन एव दुःखस्य प्रियसख्या विनोदनोपाय इति तर्कयामि ।

---

उज्जृम्भणमभिवृद्धिः तस्य स्तम्भनं प्रतिहतिः तदर्थम् । 'करणस्तम्भनार्थम्' इति पाठे वेलोल्लोलं वेलातिक्रान्तं क्षुभितं क्षोभः यस्य तथोक्तस्य करणस्य । हृदयादेरित्यर्थः । कथमपि प्रयासेन समाधीयते उत्पाद्यते । चेतोविकारः संभ्रमातिशयः । ओघः दीर्घः प्रवाहः ॥३६॥ **आर्यपुत्रस्येति** । दुर्वारो दुर्निवर्त्यः दारुणानां क्रूरमूर्च्छासंतापादीनां आरम्भ उपादानं येनेति विग्रहः । परिमुषितं निजदुःखं स्वीयदुःखं यस्येति यथोक्तम् । स्फुटति दलति ॥ आक्षिपामि । अन्यत्र नयामीत्यर्थः ॥ **संदीवण इति** । विनोदनोपायः चिरपरिचितजनस्थानाभोगावलोकनरूपः दुःखस्य संदीपन एव उद्दीपनहेतुरेवेति तर्कयामि जानामि ॥ **अस्मिन्निति** । अस्मिन्नेव लतागृहे त्वं अभवः स्थितवान् । तन्मार्गे सीताया आगमनमार्गे दत्तं ईक्षणं नेत्रं येन तथोक्तः । हंसैः कृतं उत्पादितं कौतुकं हर्षः यस्यास्तथोक्ता । गोदावरीसैकते पुलिनोच्चये । आयान्त्या आगच्छन्त्या तया सीतया परिदुर्मनायितमिव परिकुपितमनस्कमिव स्थितम् । ननु वस्तुतः कुपितहृदित्यर्थः । त्वां वीक्ष्य कातर्यात् अपराधप्रतिसंधानजनितसाध्वसात् अरविन्दकुड्मल-

---

१ 'संखोएण' इति पा० । २ 'किंपि पमुद्धं मे हिअअं ।' इति पा० । ३ 'अभ्यापन्नः' इति पा० । ४ 'तदन्यतः' इति पा० ।

**सीता**—*दालुणासि वासंति, दालुणासि ! । जा एदेहिं हिअअम्मुग्घाडिअसल्लसंघट्टणेहिं पुणोपुणोवि मं मंदभाइणिं अज्जउत्तं अ सुमरावेसि[2] ! ।

**रामः**—अयि चण्डि जानकि, इतस्ततो दृश्यस इव नानुकम्पसे ।

हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥ ३८ ॥

(इति मूर्च्छति । )

**सीता**—†हद्धी हद्धी ! । पुणोवि मुद्धो[3] अज्जउत्तो ! ।

* दारुणासि वासन्ति, दारुणासि ! । या एतैर्हृदयमर्मोद्घाटितशल्यसंघट्टनैः पुनः पुनरपि मां मन्दभागिनीमार्यपुत्रं च स्मरयसि ! ।

† हा धिक् हा धिक् ! । पुनरपि मूढ आर्यपुत्रः ! ।

निभः पद्मकोशसदृशो मुग्धः सुन्दरः प्रणामाञ्जलिः । मस्तकन्यस्तकरपुटादिप्रणामाङ्गभूताञ्जलिरित्यर्थः । अथवा 'नामयत्यपि वा देवं प्रह्वीभावयति ध्रुवम् । प्रह्वीभवति नीचे हि परो नैच्यं विलोकयन् ॥ अतो वा नम उक्तीदं यत्तं नामयति स्वयम् । वाचा नम इति प्रोच्य वपुषा मनसा च यत् ॥' इति भगवच्छास्त्रोक्तरीत्या प्रणामः कोपोद्धतरामहृदयनमनहेतुभूतोऽञ्जलिरित्यर्थः । उक्तं च—'अञ्जलिः परमा मुद्रा क्षिप्रं देवप्रसादिनि' इति । अत एव रामायणे–'कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बद्ध्वा लक्ष्मणस्य प्रसादनात् ॥' इति । बद्धः घटितः ॥ ३७ ॥ **दारुणेति** । हृदयमर्मोद्घाटितशल्यस्य हृदयमर्मणि स्थितकीलाग्रस्थसंघट्टनैः संचलनैः एतैः पुरावृत्तान्तकथनैः आर्यपुत्रं मां च स्मरयसि । मद्विषयकस्मृतिं आर्यपुत्रस्य जनयसीत्यर्थः । या स्मरयसि सा त्वं दारुणेति पूर्वेणान्वयः । चण्डि कठिने जानकि जनकपुत्रि, नानुकम्पसे दयां न करोषि । जानकीत्युक्त्वा परमदयालुजनकराजपुत्र्यास्तवेदं निर्दयत्वं नोचितमिति व्यज्यते । **हा हेति** । हाहाशब्दो दुःखातिशयद्योतकः । हृदयं स्फुटति दलति । देहबन्धः शरीरावयवानां संधिः । जातावेकत्वम् । ध्वंसते विशीर्णो भवति । जगत् लोकं शून्यं असत्कल्पम् । अभावप्रतियोगीति यावत् । मन्ये जानामि । अविरलाः अविच्छिन्नाः ज्वालाः यस्मिन्कर्मणि तत्तथोक्तम् । अन्तः शरीरान्तः ज्वलामि । काष्ठवज्ज्वलामीति यावत् । विधुरः ज्ञानादिशून्यः सीदन् विशीर्णीभवन् अन्तरात्मा अन्धे अन्धयति लोकानित्यन्धं तस्मिन् तमसि मज्जति अवगाढं भवति । मोहः मूर्च्छा विष्वक् परितः स्थगयति संछादयति । कथं करोमि किं करोमि । किं हृदयस्फोटादि निवारयामि, उत त्वदागमनार्थं लोकाननुनयामि, अथवा तान्निगृह्य त्वामानेष्यामि वेति भावः ॥ ३८ ॥

१ '°मम्मगूढ°' इति पा० । २ 'संदावेसि' (=संतापयसि ) इति पा० । ३ 'पमूढो' इति पा० ।

**वासन्ती**—देव, समाश्वसिहि समाश्वसिहि ।

**सीता**—*अज्जउत्त, मं मंदभाइणिं उद्दिसिअ सअलजीवलोअमंगलिअजम्मलाहस्स दे वारंवारं संसइदजीविअदारुणो दशापरिणामो त्ति हा हदम्हि ! । (इति मूर्च्छति ।)

**तमसा**—वत्से, समाश्वसिहि समाश्वसिहि । पुनस्ते पाणिस्पर्शो रामभद्रस्य जीवनोपायः ।

**वासन्ती**—कथमद्यापि नोच्छ्वसिति ! । हा प्रियसखि सीते, क्वासि ! । संभावयात्मनो जीवितेश्वरम् ! ।

(सीता ससंभ्रममुपसृत्य हृदि ललाटे च स्पृशति ।)

**वासन्ती**—दिष्ट्या प्रत्यापन्नचेतनो रामभद्रः ।

**रामः**—

आलिम्पन्नमृतमयैरिव प्रलेपै-
　रन्तर्वा बहिरपि वा शरीरधातून् ।
संस्पर्शः पुनरपि जीवयन्नकस्मा-
　दानन्दादपरमिवादधाति मोहम् ॥ ३९ ॥

(सानन्दमुन्मीलिताक्ष एव ।) सखि वासन्ति, दिष्ट्या वर्धसे ! ।

---

* आर्यपुत्र, मां मन्दभागिनीमुद्दिश्य सकलजीवलोकमाङ्गलिकजन्मलाभस्य ते वारंवारं संशयितजीवितदारुणो दशापरिणाम इति हा हतास्मि ! ।

---

पुनरपि मूढो मूर्च्छितः वारंवारं पदे पदे संशयितजीवितः संशयितं संशयविषयं जीवितं यस्मिंस्तथोक्तः । मरणपर्यवसायीति भावः । अत एव दारुणः क्रूरः दशापरिणामः दशापरिपाकः ॥ **हा प्रियसखीति** । जीवितेश्वरं प्राणनाथं रामं संभावय संभावितं कुरु । रामसंभवं परिहरस्वेत्यर्थः ॥ हृदि ललाटे च स्पृशति । इदं च लोकेऽनुभवसिद्धम् ॥ **दिष्ट्येति** । दिष्ट्येत्यानन्दे । प्रत्यापन्ना पुनरागता चेतना प्रज्ञा यस्य स तथोक्तः ॥ **आलिम्पन्निति** । अमृतमयैः अमृतस्वरूपैः । चिन्मयमित्यादाविव स्वार्थिको मयट्प्रत्ययः । प्रकृष्टो लेपः यैस्ते । लेपसाधनद्रव्यैः अन्तर्वा बहिरपि वा अन्तर्बहिश्च शरीरं धातूंश्च । नाडीश्च अन्तर्नाडीः बहिः शरीरमिति विवेकः । आलिम्पन्निव । सर्वाङ्गीणः लेपनकर्तेति संभावनीयः । जीवयन् प्राणप्रतिष्ठाहेतुभूतिः अकस्मात् निर्हेतुकः संस्पर्शः पुनरपि आनन्दात् आनन्दमुत्पाद्यापरं मोहं दुःखहेतुपूर्वकमूर्च्छातिरिक्तमूर्च्छाम्, आनन्दादिति ल्यब्लोपे पञ्चमी । यद्वा आनन्दादिति हेतौ पञ्चमी । तथा च दुःखजन्यपूर्वमूर्च्छातिरिक्ताम् । आनन्दहेतुकां मूर्च्छामादधतीव उत्पादयतीव । अन्ये तु परो न भवतीत्यपरः । अनन्य इत्यर्थः । आनन्दादपरं मोहं आनन्दात्मकमूर्च्छामित्याहुः ॥ ३९ ॥ सानन्द-

---

१ '°मंगलाधारस्स' इति पा० ।　२ 'त्वत्पाणिस्पर्श एव' इति पा० ।

**वासन्ती**—देव, कथमिव ?।

**रामः**—सखि, किमन्यत्। पुनरपि प्राप्ता जानकी।

**वासन्ती**—अयि देव रामभद्र, क्व सा ?।

**रामः**—(स्पर्शसुखमभिनीय।) पश्य नन्वियं पुरत एव।

**वासन्ती**—अयि देव रामभद्र, किमिति मर्मच्छेददारुणैरतिप्रलापैः प्रियसखीविपत्तिदुःखदग्धामपि मां पुनः पुनर्मन्दभाग्यां दहसि।

**सीता**—*ओसरिदुं इच्छम्मि। एसो उण चिर[1]प्पणअसंभारसोम्मसीअलेण अज्जउत्तप्परिसेण दीहदारुणं वि झत्ति संदावं उ[2]ल्लाहअंतेण वज्जलेहोवणद्धो विअ परिअद्धवावारो आसंजिओ विअ मे अग्गहत्थो।

**रामः**—सखि, कुतः प्रलापः ?।

गृहीतो यः पूर्वं परिणयविधौ कंकणधरः
सुधासूतेः पादैरमृतशिशिरैर्यः परिचितः।

**सीता**—†अज्जउत्त, सो एव्व दाणिं सि तुमं!।

---

* अपसर्तुमिच्छामि। एष पुनः चिरप्रणयसंभारसौम्यशीतलेन आर्यपुत्रस्पर्शेन दीर्घदारुणमपि झटिति संतापं उल्लाघयता वज्रलेपोपनद्ध इव पर्यस्तव्यापार आसञ्जित इव मेऽग्रहस्तः।

† आर्यपुत्र, स एवेदानीमसि त्वम्!।

---

मुन्मीलिताक्ष एव उन्मीलिते त्यक्तमुकुलीभावे अक्षिणी यस्य स तथोक्तः। अत्र हृदि ललाटे चेत्यादिना इष्टार्थोपायानुसरणात्मकाक्षेप उक्तः॥ **अयीति**। मर्मच्छेदवत् हृदयाद्यवयवक्षतिवत् दारुणैः दुःसहैः प्रलापैः अनर्थकवचोभिः दहसीत्यत्रान्वयः। प्रियसख्याः सीतायाः विपत्त्या विपदा यद्दुःखं तेन दग्धां भस्मीक्रियमाणाम्॥ **अपसर्तुमिति**। चिरस्य बहुकालरूढस्य प्रणयस्य स्नेहस्य संभारेण अतिशयेन हेतुना सौम्यः आह्लादकरः शीतलः शीतश्च तथाविधेन। दीर्घश्चासौ दारुणश्चेति विग्रहः। खञ्जकुब्जादिवत् समासः। तथाविधं संतापं झटिति उल्लाघयता लघूकुर्वता आर्यपुत्रस्पर्शेन वज्रलेपेन उपनद्ध इव घटित इव पर्यस्तव्यापारः। निष्पन्द इत्यर्थः। मे अग्रहस्तः आसञ्जित इव लग्न इव। प्रलापैरिति वासन्तीवाक्यस्योत्तरमाह—'सखि, कुतः प्रलापाः' इति। **गृहीत इति**। यः परिणयविधौ विवाहविधौ कंकणधरः गृहीतः यः करः सुधाया अमृतस्य सूतिरुत्पत्तिः यस्मात्तस्य चन्द्रस्य अमृतशिशिरैः सुधाशीतलैः पादैः किरणैः परिचितः संश्लिष्टः। उक्तविशेषणसाम्यादाह—'आर्यपुत्र, स एवेदानीं त्वमसि' इति। यः करः कंकणधरो गृहीतः यः सुधासूतेः पादैः परिचितः

---

१ 'चिरसम्भाव सोम्म°' इति पा०। २ 'हरंतेण' इति पा०। ३ 'सिज्जंतणीसहविवलहत्थो वेअणसीलो अवसो विअ' इति पा०।

**रामः**—

स एवायं तस्यास्तदितरकरौपम्यसुभगो

मया लब्धः पाणिर्ललितलवलीकन्दलनिभः ॥ ४० ॥

(इति गृह्णाति ।)

**सीता**—*हद्धी हद्धी ! । अज्जउत्तप्परिसमोहिदाए पमादो मे संवुत्तो ! ।

**रामः**—सखि वासन्ति, आनन्दमीलितः प्रियास्पर्शसाध्वसेन परवानस्मि । तत्त्वमपि धारय माम् ।

**वासन्ती**—कष्टमुन्माद एव ।

(सीता ससंभ्रमं हस्तमाक्षिप्यापसर्पति ।)

**रामः**—हा धिक् प्रमादः ! ।

करपल्लवः स तस्याः सहसैव जडो जडात्परिभ्रष्टः ।

परिकम्पिनः प्रकम्पी करान्मम स्विद्यतः स्विद्यन् ॥ ४१ ॥

**सीता**—†हद्धी हद्धी ! । अज्जवि अणुबद्धबहुघुम्मंतवेअणं ण संठावेमि अत्ताणं ! ।

**तमसा**—(सस्नेहकौतुकस्मितं निर्वर्ण्य ।)

सस्वेदरोमाञ्चितकम्पिताङ्गी

जाता प्रियस्पर्शसुखेन वत्सा ।

---

* हा धिक् हा धिक् ! । आर्यपुत्रस्पर्शमोहितायाः प्रमादो मे संवृत्तः ! ।

† हा धिक् हा धिक् ! । अद्याप्यनुबद्धबहुघूर्णमानवेदनं न संस्थापयाम्यात्मानम् ! ।

---

स एव त्वमिदानीमित्यर्थः । उभयत्रापि परिणयविधौ कंकणधरत्वं लावण्यसंश्लिष्टत्वरूपसुधासूतिकिरणपरिचितत्वं चाविशिष्टमिति कृत्वा सीतावाक्यं प्रवृत्तम् । राम आह—**स एवायमिति**। ललितेन सुकुमारेण लवलीकन्दलेन लवलीनामकलताङ्कुरेण निभः सदृशः तदितरकरेण गृहीतान्यकरेण औपम्येन सादृश्येन सुभगः मनोज्ञः । सव्यकरसादृश्यं दक्षिणकरस्य तथा दक्षिणकरसादृश्यं सव्यकरस्येति भावः । तस्याः स एव पाणिः मया लब्धः ॥ ४० ॥ गृह्णाति ग्रहणमभिनयति ॥ प्रमादः अनवधानम् ॥ प्रियास्पर्शसाध्वसेन प्रियायाः सीतायाः स्पर्शेन यत् साध्वसं शृङ्गारजं भयं तेन परवान् परवशः ॥ उन्मादः चित्तविभ्रमः ॥ हस्तमाक्षिप्य रामहस्तं निरस्य ॥ **करपल्लव इति**। प्रकम्पी चञ्चलः स्विद्यन् स्वेदवान् तस्याः सः करपल्लवः परिकम्पिनः चञ्चलात् जडात् मम करात् अनवधानतो जडात्मनः मम करात् सहसा परिभ्रष्टः परिच्युतोऽभवत् ॥ ४१ ॥ अनुबद्धा उत्पन्ना बह्वी घूर्णमाना उद्गच्छन्ती वेदना यस्य तमात्मानं

---

१ 'तुहिननिकरौपम्य°' इति पा० ।

मरुन्नवाम्भःपरिधूतसिक्ता
कदम्बयष्टिः स्फुटकोरकेव ॥ ४२ ॥

**सीता**—(स्वगतम् ।) *अवसेन एदेण अत्ताणएण लज्जाविदम्हि भअवदीए तमसाए । किं ति किल एसा मण्णिस्सदि एसो परिच्चाओ एसो अहिसंगे त्ति ।

**रामः**—(सर्वतोऽवलोक्य ।) हा, कथं नास्त्येव ! । नन्वकरुणे वैदेहि ! ।

**सीता**—†अकरुणम्हि जा एव्वंविहं तुमं पेक्खंदी एव जीवेमि ! ।

**रामः**—क्वासि प्रिये ! । देवि, प्रसीद प्रसीद । न मामेवंविधं परित्यक्तुमर्हसि ! ।

**सीता**—‡अयि अज्जउत्त, विप्पदीवं विअ ।

**वासन्ती**—देव, प्रसीद प्रसीद । स्वेनैव लोकोत्तरेण धैर्येण संस्तम्भयातिभूमिं गतमात्मानम् । कुत्र मे प्रियसखी ! ।

**रामः**—व्यक्तं नास्त्येव । कथमन्यथा वासन्त्यपि तां न पश्येत् ? । अपि खलु स्वप्न एष स्यात् । न चास्मि सुप्तः । कुतो रामस्य निद्रा ? । सर्वथापि

---

* अवशेनैतेनात्मना लज्जापितास्मि भगवत्या तमसया । किमिति किलैषा मंस्यत एष परित्याग एषोऽभिषङ्ग इति ।

† अकरुणास्मि यैवंविधं त्वां पश्यन्त्येव जीवामि ! ।

‡ अयि आर्यपुत्र, विप्रतीपमिव ।

---

न संस्थापयामि न स्थिरं करोमि ॥४२॥ कथं नास्त्येवेति व्यक्तम् । स्फुटमित्यर्थः । कथमन्यथा वासन्ती न पश्येत् ? । अन्यथा सीताया अस्तित्वे वासन्ती कथं कस्माद्धेतोः न पश्येत् ? । स्वस्य भ्रान्तिशङ्कया वनदेवतायाः प्रमितिप्रकर्षं विभाव्य वासन्तीत्युक्तम् । एवं योग्यानुपलम्भेन सीताया नास्तित्वं निश्चित्य पूर्वोक्तस्पर्शनस्य भ्रमरूपत्वं मीमांसते ॥ अपि खलु स्वप्न एषः स्यात् । एष सीतास्पर्शः स्वप्नः स्यात् । स्वाप्निकज्ञानविषयः स्यादिति संभावना । यद्वा एष सीतास्पर्शः स्वप्नः स्यात्स्वप्नावस्थोत्पादितः किमु ! । स्वप्नावस्थाया हि 'संध्ये सृष्टिराह हि' इति सूत्रप्रामाण्यात् । तत्पुरुषानुभाव्यतत्तत्पदार्थसृष्टिः परमात्मकर्तृकाभ्युपगम्यते । विस्तरस्तूत्तरमीमांसायां द्रष्टव्यः । स्वप्नं प्रति सुप्तेः कारणत्वादाह—**न चास्मि सुप्त इति** । तदुपपादयति—**कुतो रामस्य निद्रेति** । 'अनिद्रः सततं रामः' इति सीतावियोगे रामस्य निद्रा नास्तीति प्रसिद्धमेवेति नतूपपत्तिरिति भावः । पर्यवसितमाह—**सर्वथेत्यादिना** । मम वासन्त्याश्चानुपलम्भान्निद्राया अभावेन स्वप्नानुपपत्तेश्च सर्वप्रकारेणापि सीतास्पर्शनं भ्रमरूपमिति भावः । विप्रलम्भः भ्रमः । भगवानित्यनतिलङ्घनीयत्वप्रयुक्तपूज्यताख्यापनार्थम् । अनुबध्नात्यनुसरति ॥ दारुणया

स एवैष भगवाननेकवारपरिकल्पितो विप्रलम्भः पुनः पुनरनुबध्नाति माम्।

**सीता**—*मए एव्व दारुणाए विप्पलद्धो अज्जउत्तो!।

**वासन्ती**—देव, पश्य पश्य।

पौलस्त्यस्य जटायुषा विघटितः कार्ष्णायसोऽयं रथ-
स्ते चैते पुरतः पिशाचवदनाः कङ्कालशेषाः खराः।
खड्गच्छिन्नजटायुपक्षतिरितः सीतां चलन्तीं वह-
न्नन्तर्व्यापृतविद्युदम्बुद इव द्यामभ्युदस्थादरिः॥ ४३॥

**सीता**—(सभयम्।) †अज्जउत्त, तादो वावादीअदि। ता परित्ताहि परित्ताहि। अहं वि अवहरिज्जामि!।

**रामः**—(सवेगमुत्थाय।) आः पाप तातप्राणसीतापहारिन् लङ्कापते, क्व यास्यसि?।

**वासन्ती**—अयि देव राक्षसकुलप्रलयधूमकेतो, किमद्यापि ते मन्युविषयः?।

**सीता**—‡अम्महे, उब्भत्तम्हि!।

---

* मयैव दारुणया विप्रलब्ध आर्यपुत्रः!।

† आर्यपुत्र, तातो व्यापाद्यते। तस्मात्परित्रायस्व परित्रायस्व। अहमप्यपह्रिये!।

‡ अहो, उद्भ्रान्तास्मि!।

---

कठिनया। विप्रलब्धः वञ्चितः। भ्रान्त इति वा॥ **पौलस्त्यस्येति**। अयं दृश्यमानः। उद्देश्यसमर्पकमिदम्। कृष्णायसविकारः कार्ष्णायसः। लोहमय इत्यर्थः। जटायुषा विघटितः प्रध्वंसितः पौलस्त्यस्य रावणस्य रथः स्यन्दनः। विधेयसमर्पकमिदम्। एते पुरतः पुरोवर्तमानाः कङ्कालशेषाः शरीरास्थिरूपशिष्टांशाः। ते पिशाचवदनाः खराः रावणस्यन्दनीयाः पिशाचमुखाः रासभाः खड्गेन छिन्ना कृत्ता च सा जटायुपक्षतिश्चेति समानाधिकरणसमासः। इतः अत्र। पक्षतिः पक्षमूलम्। अन्तर्व्यापृता अन्तश्चलन्ती विद्युत्तडिद्यस्य तथोक्तः। अनेन दृष्टान्तेन रावणस्पर्शवशदोषो नास्तीति सूचितम्। अरिः रावणः। द्यां खं अभ्युदस्थादभ्युद्गतवान्। इति इत्यस्माद्देशादिति वा॥ ४३॥ **आः पापेत्यादि**। अत्र रोषसंभ्रमवचनरूपं तोटकं नाम संध्यङ्गमुक्तम्॥ प्रलयधूमकेतो प्रलयसूचकधूमकेतुनामकग्रहसदृशेति भावसंबुद्धिः। यद्वा राक्षसकुलस्य प्रलये धूमकेतुरग्निः। राक्षसकुलदाहे प्रलयाग्निसदृशेत्यर्थः। मन्युविषयः क्रोधविषयः। अन्य एव पूर्वसीतावियोगाद्विलक्षण एव विपर्ययः सीतावियोग-

रामः—अन्य एवायमधुना विपर्ययो वर्तते।

उपायानां भावाद्[1]विरतविनोदव्यतिकरै-
र्विमर्दैर्वीराणां जनितजगदत्यद्भुतरसः।
वियोगो मुग्धाक्ष्याः स खलु रिपुघातावधिरभू-
त्कटुस्तूष्णीं सह्यो निरवधिरयं तु प्रविलयः॥ ४४॥

सीता—*बहुमाणिदम्हि पुव्वविरहे। णिरवधि त्ति हा हदम्हि!।

रामः—कष्टं भोः!।

व्यर्थं यत्र कपीन्द्रसख्यमपि मे वीर्यं हरीणां वृथा
प्रज्ञा जाम्बवतो[2] न यत्र न गतिः पुत्रस्य वायोरपि।
मार्गं यत्र न विश्वकर्मतनयः कर्तुं नलोऽपि क्षमः
सौमित्रेरपि पत्रिणामविषये तत्र प्रिये क्वासि मे॥ ४५॥

* बहुमानितास्मि पूर्वविरहे। निरवधिरिति हा हतास्मि!।

रूपविपर्यासः। वैलक्षण्यमेवाह—**उपायानामिति**। उपायानां सेनासंनाहसेतुबन्धादिसाधनानां भावात्सत्त्वादविरताः संतताः विनोदानां दुःखविस्मरणहेतूनां व्यतिकराः संबन्धा येषु तथोक्ताः तथाविधैः वीराणां सुग्रीवप्रभृतीनां विमर्दैः परस्परसंप्रहारैर्जनित उत्पादितः जगतामत्यद्भुतरसो वीररसमयरसो येनेति तथोक्तः। वीररसादद्भुतरसस्योत्पत्तिरिति रसविदः। तदुक्तम्—'हास्यो भवति शृङ्गारात्करुणो रौद्रकर्मणः। अद्भुतश्च तथा वीराद्बीभत्साच्च भयानकः॥' इति। मुग्धे सुन्दरे अक्षिणी यस्या इति बहुव्रीहिः। 'न त्वामिहस्थां जानीते रामः कमललोचने। तेन त्वां नानयत्याशु शचीमिव पुरंदरः॥' इत्युक्तम्। स वियोगः पूर्वकालिकविरहः। रिपुघातावधिरभूद्रावणसंहारपर्यन्तोऽभूत्। कटुः क्रूरः। तूष्णीं सह्यः उपायाद्यभावात् जोषंभावेन सह्यः। अयं तु प्रविलयः इदानींतनवियोगः। पुनर्दर्शनाभावाभिप्रायेण वियोगस्य प्रलयत्वोक्तिः। निरवधिर्यावज्जीवभावीत्यर्थः॥४४॥ बहुमानितास्मि पूर्वविरहहेतुकबहुमानवत्यस्मि। रिपुघातावधिरिति रावणसंहारस्य तन्मूलकत्वोक्तेरिति भावः। 'न त्वदर्थं मया कृतम्' इति हि पूर्वं रामेणोक्तम्। निरवधिरिति हा हतास्मि। अस्य वियोगस्य निरवधित्वोक्तेः प्रत्याशा छिन्नेति भावः। **व्यर्थमिति**। यत्र प्रदेशे कपीन्द्रसख्यं सुग्रीवमैत्रम्। इदमुपलक्षणं सुग्रीवापेक्षयोपसर्जनत्वस्यापि। तदुक्तं रामायणे—'लोकनाथः पुरा भूत्वा सुग्रीवं नाथमिच्छति' इति, 'स रामो वानरेन्द्रस्य प्रसादमभिकाङ्क्षते' इति च। व्यर्थं निरर्थकम्। हरीणां वानराणां वीर्यं पराक्रमः यत्र वृथा निष्प्रयोजकः। जाम्बवतः प्रज्ञा युक्तायुक्तकुशलता यत्र न सार्थिकेत्यध्याहारः। वायोः पुत्रस्य हनूमतः गतिरपि न सार्थिका। मार्गं सेतुं कर्तुम्। न क्षमः न योग्यः। सौमित्रेरपि लक्ष्मणस्य। अपिशब्दात् स्वस्य। पत्रिणां बाणानामविषये अगोचरे तत्र तथाविधे क्व कस्मिन्देशे

1 'अविरत°' इति पा०। 2 'जाम्बवतोऽपि यत्र न' इति पा०।

**सीता**—*[1]बहुमाणिदम्हि पुव्वविरहे ।

**रामः**—सखि वासन्ति, दुःखायैव सुहृदामिदानीं रामदर्शनम् ! । कियच्चिरं त्वा रोदयिष्यामि ! । तदनुजानीहि मां गमनाय ।

**सीता**—(सोद्वेगमोहं तमसामाश्लिष्य ।) †हा भअवदि तमसे, गच्छदि दाणिं अज्जउत्तो ? । किं करिस्सं ! । (इति मूर्च्छति ।)

**तमसा**—वत्से जानकि, समाश्वसिहि समाश्वसिहि विधिस्तवानुकूलो भविष्यति ! । [2]तदायुष्मतोः कुशलवयोर्वर्षर्द्धि[3]मङ्गलानि संपादयितुं भागीरथीपदान्तिकमेव गच्छावः ।

**सीता**—‡भअवदि, पसीद । खणमेत्तं वि दुल्लहदंसणं जणं पेक्खामि ।

**रामः**—अस्ति चेदानीम[4]श्वमेधसहधर्मचारिणी मे ।

[5]**सीता**—(साक्षेपम् ।) §अज्जउत्त, का ? ।

**वासन्ती**—परिणीतमपि किम् ? ।

**रामः**—नहि नहि । हिरण्मयी सीताप्रतिकृतिः ।

---

* बहुमानितास्मि पूर्वविरहे ।
† हा भवति तमसे, गच्छतीदानीमार्यपुत्रः ! । किं करोमि ! ।
‡ भगवति, प्रसीद । क्षणमात्रमपि दुर्लभदर्शनं जनं पश्यामि ।
§ आर्यपुत्र, का ? ।

---

अस्मि भवसि ॥४५॥ सुहृदां मित्राणां रामदर्शनं दुःखायैव दुःखफलदमेव । रोदयिष्यामि रुदन्तीं करोमि । अनुजानीहि अनुमतिं कुरु ॥ वर्षर्द्धिमङ्गलानि द्वादशवर्षपूर्तिमङ्गलानि देवतापूजादीनि शुभानि । आयुष्मतोः कुशलवयोः कुशलवोद्देशेन संपादयितुमुत्पादयितुम् । भागीरथ्याः संबन्धद्योतनायेयमुक्तिः ॥ अश्वमेधस्य सहधर्मचारिणीति विग्रहः । दम्पत्योः सहाधिकारत्वात् । अश्वमेधनिरूपितकर्तृकत्ववती जायास्तीति भावः ॥ साक्षेपम् । आक्षेपश्चोदनं तेन सह वर्तत इत्यर्थः । क्रियाविशेषणम् । आर्यपुत्र, का ? । सहधर्मचारिणीति शेषः ॥ परिणीतमपि भावे क्तः । परिणयोऽपि, किमिति काक्वा योजनीयम् । सीतापरित्यागानन्तरं न केवलं शरीरधारणं किंतु परिणयोऽपि जातः किमिति समुच्चयार्थः । सीतावियोगे रामस्य शरीरधारणमाश्चर्यमिति प्रसिद्धम् । तदुक्तं हनूमता—'दुष्करं कृतवान्रामो हीनो यदनया प्रभुः । धारयत्यात्मनो देहं न शोकेनावसीदति ॥' इति, 'दुष्करं कुरुते रामो य इमां मत्तकाशिनीम् । विना सीतां महाबाहुर्मुहूर्तमपि जीवति ॥' इति च ॥ नहि नहि । परिणयप्रसक्तिरप्यनिष्टेति द्विरुक्त्या व्यज्यते ॥ इदानीमपि त्वम् । 'स्वापहेतुरनुपाश्रितोऽन्यया' इत्युक्तरीत्या एकदारव्रतत्वं तवेदानीमेव

---

१ 'बहुमण्णाविदम्हं तं पुव्वविरहं' इति पा० । २ 'नन्वावामायुष्मतोः' इति पा० । ३ 'वर्षवर्धनमङ्गलानि' इति पा० । ४ 'अश्वमेधाय' इति पा० । ५ क्वचिन्नैतद्वाक्यं लभ्यते ।

**सीता**—(सोच्छ्वासास्रम् ।) *अज्जउत्त, दाणिं सि तुमं । अम्महे, उक्खाइदं दाणिं मे परिच्चाअसल्लं[1] अज्जउत्तेण ! ।

**रामः**—तत्रापि तावद्बाष्पदिग्धं चक्षुर्विनोदयामि ।

**सीता**—†धण्णा खु सा जा एव्वं अज्जउत्तेण बहुमण्णीअदि ! । जा एव्वं अज्जउत्तं विणोदयंदी आसाबंधणं खु जादा जीअलोअस्स ।

**तमसा**—(सस्मितस्नेहार्द्रं परिष्वज्य ।) अयि वत्से, एवमात्मा स्तूयते ।

**सीता**—(सलज्जम् ।) ‡परिहसिदम्हि भअवदीए ।

**वासन्ती**—महानयं व्यतिकरोऽस्माकं प्रसादः । गमनं प्रति यथा कार्यहानिर्न भवति तथा कार्यम् ।

**रामः**—तथास्तु ।

**सीता**—§पडिऊला दाणिं मे वासंदी संवुत्ता ।

---

* आर्यपुत्र, इदानीमसि त्वम् । अहो, उत्खातितमिदानीं मे परित्यागशल्यमार्यपुत्रेण ! ।

† धन्या खलु सा यैवमार्यपुत्रेण बहुमन्यते ! । यैवमार्यपुत्रं विनोदयन्त्याशाबन्धनं खलु जाता जीवलोकस्य ।

‡ परिहसितास्मि भगवत्या ।

§ प्रतिकूलेदानीं मे वासन्ती संवृत्ता ।

---

प्रकटितमिति भावः । परित्याग एव शल्यं परित्यागशल्यम् । निष्कारणपरित्यागस्य प्रत्यवायहेतुत्वप्रयुक्तदुःखजनकत्वाच्छल्यत्वरूपणम् । ननु वास्तवदोषाभावेऽपि दोषवत्ता वृथारूपमित्यभिशस्तिमतां परित्यागो धर्मशास्त्रसिद्ध इति चेन्मैवम् । अग्निप्रवेशादिना मिथ्याभिशस्तेरनवकाशात् । उत्खातितम् उद्धृतम् ॥ तत्रापि हिरण्मयीसीताप्रतिकृतौ बाष्पदिग्धमश्रुणा लिप्तम् । विनोदयामि विस्मृतदुःखं करोमि । एवं च सीताप्रतिकृतेरश्वमेधसहधर्मचारिणीत्वमानुषङ्गिकम् । मुख्यं तु चक्षुर्विनोदनमिति सूचितम् । एवं बहुमन्यते चक्षुर्विनोदहेतुत्वप्रयुक्तबहुमानविषयीक्रियते सा प्रतिकृतिर्धन्या यैवमार्यपुत्रं विनोदयन्ती विस्मृतदुःखं कुर्वन्ती जीवलोकस्याशाबन्धनं रामजीवनप्रत्याशाहेतुत्वात्स्वस्वविषयकाशाहेतुर्जाता सा धन्येत्यन्वयः ॥ परिष्वज्य आलिङ्ग्य । एवं 'धन्या खलु सा' इत्यादिपूर्वोक्तरीत्या आत्मा स्तूयते स्तुतिविषयीक्रियते । त्वयेति शेषः ॥ भगवत्या । तमसयेत्यर्थः ॥ अयं व्यतिकर एष समागमः । अस्माकं महान्प्रसादः । अस्मद्विषयानुग्रहप्रयोजित इत्यर्थः । यथा येन प्रकारेण कार्यस्य कर्तव्यस्य हानिर्लोपो न भवति तथा तेन प्रकारेण गमनं प्रति गमनोद्देशेन कार्यं यत्नः कर्तव्यः ॥ इदानीं वासन्ती मे प्रतिकूलानिष्टकारिणी संवृत्ता जाता । रामगमनं प्रत्यनुज्ञाकरणादिति भावः ।

---

१ 'परिच्चाअलज्जासल्लं' इति पा० ।

**तमसा**—वत्से, एहि गच्छावः।

**सीता**—*एव्वं करेम्ह।

**तमसा**—कथं वा गम्यते!। यस्यास्तव

प्रत्युप्तस्येव दयिते तृष्णादीर्घस्य चक्षुषः।
मर्मच्छेदोपमैर्यत्नैः संनिकर्षो निरुध्यते ॥ ४६ ॥

**सीता**—[1]†णमो सुकिदपुण्णजणदंसणिज्जाणं अज्जउत्तचलणकमलाणं। (इति मूर्च्छति।)

**तमसा**—वत्से, समाश्वसिहि।

**सीता**—(आश्वस्य।) ‡किअच्चिरं वा मेहंतरेण न पुंण्णचंददंसणं!।

---

* एवं करिष्यावः।

† नमः सुकृतपुण्यजनदर्शनीयाभ्यामार्यपुत्रचरणकमलाभ्याम्।

‡ कियच्चिरं वा मेघान्तरेण न पूर्णचन्द्रदर्शनम्!।

---

एवं कुर्वः। गच्छाव इत्यर्थः। **यस्यास्तव। प्रत्युप्तस्येवेति**। तृष्णया अवलोकनस्पृहया। दीर्घस्य आयतस्य। दयिते रामे प्रत्युप्तस्येव कीलितस्येव स्थितस्य यस्यास्तव चक्षुषो नेत्रस्य संनिकर्षः संबन्धः। मर्मच्छेदोपमैर्हृदयादिप्रदेशकृन्तनसदृशैर्यत्नैर्निरुध्यते निवर्त्यते। तथाविधया त्वया कथं गम्यत इति पूर्वेणान्वयः। तृष्णादीर्घस्येत्युक्त्या दयिते प्रत्युप्तस्येवेति दयितपदविवक्षितरामस्यामृतसादृश्यं व्यज्यते ॥ ४६ ॥ **नम इति**। प्राकृते चतुर्थीस्थाने षष्ठीद्विवचनस्य बहुवचनत्वम्। सुष्टुकृतानि पुण्यानि यैस्ते सुकृतपुण्याः। सुकृतपुण्याश्च ते जनाश्चेति विग्रहे कर्मधारयः। तथाविधैः दर्शनीयाभ्यां सेवितुं शक्याभ्याम्। ननु मादृशपापकृज्जनदर्शनार्हाभ्यामित्यर्थः। 'न ते मनुष्या देवास्ते ये चारुशुभकुण्डलम्' इत्यादि दशरथोक्तरीत्या पुण्यकृद्दर्शनीयत्वं रामचरणयोरिति भावः। 'ममैव दुष्कृतं किंचिन्महदस्ति न संशयः' इत्युक्तरीत्या स्वस्याः पापकृत्त्वमिति तात्पर्यम्। अत्र सुष्ठु कृतं यैस्ते सुकृताः। तथाविधाश्च ते पुण्यजना राक्षसाश्चेति ते। विभीषणादयः इति कश्चित्। उक्तरीत्याश्रयणे कृतस्यापि संग्रह इति धिक्। इति मूर्च्छति मूर्च्छामभिनयति। कियच्चिरं मेघान्तरेण पूर्णचन्द्रदर्शनं मेघमध्ये पूर्णचन्द्रदर्शनम् ॥ 'वीरशृङ्गारयोरेकः प्रधानं यत्र वर्ण्यते' इत्यौत्सर्गिकस्य शृङ्गारवीरान्यतरप्राधान्यस्य वीरशृङ्गारौ प्रायिकावित्यपवादेऽपि करुणरसप्राधान्यकरणे मानाभावः, रसान्तराणां सत्त्वात्। नह्यत्र विनिगमकमस्ति। येन करुणरसस्य प्राधान्यमुपपद्यते। किंच करुणस्य दुःखात्मकत्वेन रसत्वं नास्ति येन रसप्रधाननाटके तस्योक्तिसंभवः स्यादिति शङ्कां कविस्तमसावाक्यव्याजेन परिहरति ॥

---

१ 'पुण्णिमाचंद°' इति पा०।

**तमसा**—अहो संविधानकम् ! ।

एको रसः करुण एव निमित्तभेदा-
द्भिन्नः पृथक्पृथगिवे श्रयते विवर्तान् ।
आवर्तबुद्बुदतरंगमयान्विकारा-
नम्भो यथा सलिलमेव हि तत्समस्तम् ॥ ४७ ॥

**रामः**—अयि विमानराज, इत इतः ।

(सर्वे उत्तिष्ठन्ति ।)

**अहो संविधानकमिति** । अपूर्वरूपकनिर्माणं विस्मयनीयमित्यर्थः । **एक इति** । रस्यते स्वाद्यत इति रसः काव्यानुशीलिनाभ्यासवशविशदीभूतवर्णनीयतन्मयीभवनयोग्यसामाजिकमनोमुकुरभाव्यमानतया निर्भरानन्दसंविद्रूपः । करुणः इष्टजनवियोगजन्यदुःखातिशयः । एक एव सन्नपि निमित्तभेदात् व्यञ्जकविभावादिविच्छित्तिविशेषाद्भिन्नः विलक्षणः । पृथक्पृथग्विवर्तान् परस्परविलक्षणशृङ्गाराद्यात्मना परिणामान् । 'व्यस्तस्तपरिणामः स्याद्विवर्तः' इति **कपिलः** । श्रयते भजते । एकस्यानेकधा विकारमात्रे दृष्टान्तमाह–**आवर्तेति** । आवर्तः जलस्य भ्रमः, बुद्बुदः कुड्मलाकारजलसंस्थानविशेषः, तरङ्गः भङ्गः एतद्रूपान्विकारान् । अवस्थान्तराणीत्यर्थः । तत्समस्तमावर्तादिकं सर्वं सलिलमेव जलमेव । तरङ्गादीनां जलविवर्तत्वाभावाद्विकारमात्रे दृष्टान्तार्थकमिदम् । अत एव विवर्तानित्युक्तिः । इदमत्र कत्रेर्मतम्–'यद्यपि शृङ्गार एक एव रस इति शृङ्गारप्रकाशकारादिमतम्, तथापि प्राचुर्याद्रागिविरागिसाधारण्यात्करुण एक एव रसः । अन्ये तु तद्विकृतयः' इति । करुणस्यानुकार्ये रामादौ दुःखरूपत्वेऽपि सहृदयानामानन्दात्मना परिणमतीत्युक्तरीत्या सामाजिके आनन्दरूपत्वमेव । तर्हि भावकानां करुणात्मककाव्यश्रवणे अश्रुधाराविर्भावः कथमिति चेदत्राहुः–संभोगसमये स्त्रीणामधरदंशनादौ कृत्रिमदुःखानुभवसीत्कारवदत्राप्युपपत्तिः । सुखेऽपि दुःखवदुपचारः कुट्टमितमिति तल्लक्षणात् । यद्यस्य सहजदुःखात्मकत्वं स्यात्, न कोऽपि सामाजिकस्तत्र प्रवर्तेत, ततश्च करुणैकरसानां रामायणादीनामुच्छेदप्रसङ्गः स्यात् । तस्माद्रसान्तरवत्करुणस्याप्यानन्दात्मकत्वमेवेति । एवंच रसान्तरापेक्षया प्रकृतित्वमेव करुणस्य प्राधान्ये विनिगमकं शृङ्गारवीरयोः प्रायिकत्वोक्तेस्तदभावेऽस्यैवोचितत्वादिति । यद्वा एको रसः रसशब्दवाच्यः । 'अत्र ओदनं पचति' 'अस्य सूत्रस्य पटो वातव्यः' इत्यादाविव भाविनीं वृत्तिमाश्रित्य रसशब्दप्रयोगः । एवम् 'पुटपाकप्रतीकाशो रामस्य करुणो रसः' इत्यत्रापि बोध्यम् । करुणः अनुकार्यरामादिगतेष्टजनवियोगजन्यदुःखातिशयः । एक एव सन्नपि निमित्तभेदात्सखित्वपतिपत्नीत्वाद्युपाधिभेदाद्भिन्नः विलक्षण इव पृथक्पृथग्विवर्तान् श्रयते । वासन्तीसीतारामप्रभृतिषु परस्परविलक्षणावस्थाविशेषान्भजति । अत्र विवर्तशब्दो विकारमात्रपरः । एवं दृष्टान्तसामञ्जस्यमुपपद्यते । शेषं पूर्ववत् । अस्मिन् पक्षे रसान्तरसत्त्वे करुणरसप्राधान्यं तूक्तयुक्त्या ग्रन्थाद्बहिः समर्थनीयम् । तथा चैतादृशकरुणरसप्रधानत्वादपूर्वोऽयं कथासंनिवेश इति पूर्वेणान्वयः ॥ ४७ ॥ तमसा-

१ 'वाश्रयते' इति पा० ।

**तमसावासन्त्यौ**—(सीतारामौ प्रति ।)

अवनिरमरसिन्धुः सार्धमस्मद्विधाभिः
स च कुलपतिराद्यश्छन्दसां यः प्रयोक्ता ।
स च मुनिरनुयातारुन्धतीको वसिष्ठ-
स्तव वितरतु भद्रं भूयसे मङ्गलाय ॥ ४८ ॥

(इति निष्क्रान्ताः सर्वे ।)

तृतीयोऽङ्कः ।

---

वासन्त्यौ सीतारामौ प्रति यथासंख्यं प्रति उद्दिश्य । **अवनिरिति** । अवनिः भूमिः । अमरसिन्धुः गङ्गा । अस्मद्विधाभिः । तमसापक्षे मुरलागोदावरीप्रभृतिभिरित्यर्थः । वासन्तीपक्षे अन्याभिर्देवताभिः सहेत्यर्थः । यश्छन्दसां प्रयोक्ता वेदानां प्रवक्ता आद्यः कुलपतिः स च सूर्यश्च । मुनिर्मननशीलः सः प्रसिद्धः । अनुयातानुगता अरुन्धतीयमिति विग्रहे द्वितीयाबहुव्रीहिः । 'शेषाद्विभाषा' इति कप् । 'न कपि' इति ह्रस्वप्रतिषेधः । तथाविधो वसिष्ठः । तव भूयसे प्रचुराय मङ्गलाय भद्रं मङ्गलं वितरतु ददातु । अत्र गर्भबीजस्य ऋषिश्रेयोवितरणरूपस्योद्भेदनादाक्षेपो नाम संध्यङ्गमुक्तं भवति । 'यदत्रोच्छृङ्खलं किंचित्कविनानेन बध्यते । निरङ्कुशतया तत्तु समाधेयं मनीषिभिः ॥ भावस्य तु गभीरत्वात्सा कश्चिदिह कथ्यते । कोशव्याकरणे प्रायेणोच्यते ग्रन्थगौरवात्' ॥४८॥

वाधूलवंशजनुषो भूसारनिवासराघवार्यस्य ।
उत्तररामचरित्रव्याख्यायामवसितस्तृतीयोऽङ्कः ॥

**इति श्रीवाधूलवीरराघवविरचितायां भवभूतिभावतलस्पर्शिनीसमाख्यायामुत्तररामचरितव्याख्यायां तृतीयोऽङ्कः ॥**



---

१ 'त्वयि' इति पा० ।

# उत्तररामचरितम् ।

चतुर्थोऽङ्कः ।

(ततः प्रविशतस्तापसौ ।)

**एकः**—सौधातके, दृश्यतामद्य भूयिष्ठसन्निधापितातिथिजनस्य समधिकारम्भरमणीयता भगवतो वाल्मीकेराश्रमपदस्य । तथाहि

नीवारौदनमण्डमुष्णमधुरं सद्यःप्रसूतप्रिया-
पीतादभ्यधिकं तपोवनमृगः पर्याप्तमाचामति ।
गन्धेन स्फुरता मनागनुसृतो भक्तस्य सर्पिष्मतः
कर्कन्धूफलमिश्रशाकपचनामोदः परिस्तीर्यते ॥ १ ॥

---

**तत इति** । तापसौ तपःशीलौ । एकः । तयोरन्यतर इत्यर्थः । सुधातुरपत्यं सौधातकिः । 'सुधातुरकङ् च' इत्यकङादेश इञ्प्रत्ययश्च । तस्य संबुद्धिः सौधातके इति । अद्य मध्याह्ने भूयिष्ठं यथा भवति तथा सन्निधापितः निकटागामितः अतिथिजनो यस्मिन्निति तथोक्तस्य भगवतो वाल्मीकेः ज्ञानशक्त्यादिपूर्णस्य प्राचेतसस्य यदाश्रमपदं आश्रमस्थानं तस्य समधिकारम्भेण प्रचुरतरमारभ्यमाणातिथिजनसत्कारादिना रमणीयता हृद्यता दृश्यतां चक्षुर्विषयीक्रियताम् । त्वयेति शेषः । **नीवारेति** । तपोवनमृगः तपोवनाश्रयो मुनिसंवर्धितहरिणः । सद्यः समानेऽह्नि । तस्मिन्दिन इत्यर्थः ॥ प्रसूता प्रसववती । कर्तरि क्तः । तथाविधया प्रियया प्रियविषयहरिण्या पीतात् पानं प्राप्य । भावे क्तः । ल्यब्लोपे पञ्चमी । अभ्यधिकं अवशिष्टं प्रचुरं वा हरिणीकर्तृकं वा पानं प्राप्यापि प्रचुरमित्यर्थः । उष्णं च तत् मधुरं च माधुर्ययुक्तं चेति विशेषणसमासः । तथाविधं नीवारौदनमण्डं नीवारो धान्यविशेषः तत्संबन्ध्योदनस्य यन्मण्डं घनीभूतद्रवविशेषः तत्पर्याप्तं यावदिच्छानिवृत्ति आचामति पिबति । यद्वा सद्यःप्रसूतप्रियापीतादिति हेतौ पञ्चमी । सद्यःप्रसूतप्रियाकर्तृकपानाद्धेतोः अभ्यधिकं यथा भवति तथा प्रचुरं यथा भवति तथा उष्णं मधुरं चेत्यर्थः । अत्र सद्यःप्रसूतत्वमुष्णत्वे हेतुः । उष्णत्वं हि प्रसवविह्वलशरीरतोदपरिहारकम् । प्रियात्वं च मधुरत्वे हेतुः । अत एव मधुरत्वोक्तिः प्रयोजनवती । अन्यथा तस्य माधुर्याव्यभिचारात्तद्वैयर्थ्यं स्पष्टमेव । इदमेवाभिसंधाय 'अम्बुनीवारशष्पैः' इत्यत्र अम्बुना तरून् अम्बुनीवाराभ्यां शकुनीन् अम्बुनीवारशष्पैः कुरङ्गानिति विवेक उक्त इति बोध्यम् । अत एव पर्याप्तं यावदिच्छानिवृत्ति आचामति पिबति । सर्पिष्मतो घृतवतः भक्तस्यान्नस्य स्फुरता प्रसरता गन्धेन सौरभ्येण मनागीषदनुसृतः अनुगतः कर्कन्धूफलमिश्रस्य बदरीफलमिश्रस्य शाकपचनस्य पच्यमानशाकस्य । बदरीफलानि हि आत्मरसार्थं शाकेन सह पच्यन्ते । आमोदः सौरभ्यं परिस्तीर्यते विस्तीर्यते वितितीक्रियते । वायुनेति शेषः । यद्वा परिस्तीर्यते निस्तीर्णो भवतीत्यर्थः । लूयते केदारः स्वयमेवेत्यादाविव कर्मवद्भावाद्यात्मनेपदे । अथवा सर्पिष्मतो भक्तस्य स्फुरता गन्धेन कर्त्रा अनुसृतः अनुक्षणं प्रसर्पन् कर्कन्धूफलमिश्रशाकपचनामोदः कर्म

**सौधातकिः**—*साअदं अणेअपिआराणं जिण्णकुच्छाणं अणज्झाअकालणाणं [1]तपोधणाणं ।

**प्रथमः**—(विहस्य ।) अपूर्णः खलु बहुमानहेतुर्गुरुषु सौधातके ।

**सौधातकिः**—†भो दंडाअण, किंणामहेओ दाणिं एसो महत्तस्स इत्थिआसत्थस्स [2]धुरंधरो अज्ज अदिही आअदो ।

**[3]दण्डायनः**—धिक्प्रहसनम् ! । नन्वयमृष्यशृङ्गाश्रमादरुन्धतीं पुरस्कृत्य महाराजदशरथस्य दारानधिष्ठाय भगवान्वसिष्ठः प्राप्तः । तत्किमेवं प्रलपसि ? ।

**सौधातकिः**—‡हुं वसिट्ठो ।

**दण्डायनः**—अथ किम् ? ।

**सौधातकिः**—§मए उण जाणिदं को वि [4]वग्घो विअ एसो त्ति ।

* स्वागतमनेकप्रकाराणां जीर्णकूर्चानामनध्यायकारणानां तपोधनानाम् ।

† भो दण्डायन, किंनामधेय इदानीमेष महतः स्त्रीसार्थस्य धुरंधरोऽद्यातिथिरागतः ।

‡ हुं वसिष्ठः ।

§ मया पुनर्ज्ञातं कोऽपि व्याघ्र इवैष इति ।

अभिव्याप्यत इति व्याख्येयम् ॥ १ ॥ **साअदमिति** । स्वागतम् । सकारस्य न लुक् । गकारस्य प्रायो लुक् । 'कगचजतदपयवाम्–' (है. १।१७७) इति प्राकृतव्याकरणसूत्रेण लोपः । अकारस्य ईषत्स्पृष्टतया श्रुतिरपि । सूत्रे प्रायोग्रहणाद्दकारस्य न लुक् । अनेकप्रकाराणाम् । बहुविधानामित्यर्थः । पूर्ववदेव लोपः । यः श्रुतिबोध्यम् । अत्र चकारशब्दस्य घञेति प्राकृतव्याकरणसूत्रेण पूर्वस्य वैकल्पिकत्वात् 'पिआर' इति दीर्घः । 'पाआराणा इति त्वासुपो'रिति सूत्रेणानुस्वारः । अनध्ययननिमित्तानामित्यर्थः । शिष्टानध्ययनस्य धर्मशास्त्रसिद्धत्वादिति भावः । जीर्णकूर्चानां शिथिलभ्रूमध्यानाम् । जीर्णशब्दे 'संयोगे च' इति प्राकृतव्याकरणसूत्रेण ह्रस्वः । गुरुषु वसिष्ठादिषु । **भो दंडाअणेति** । नामधेयं तस्य संबुद्धिः । महतः प्रचुरस्य स्त्रीसार्थस्य अङ्गनासमूहस्य धुरंधरो निर्वापकोऽतिथिरागतः किंनामधेय इत्यन्वयः । दंडाअणेति स्वरस्य बिन्दवमिति ह्रस्वः । किंणामहेअ इत्यत्र 'खघथधभाम्' (है. १।१८७) इति सूत्रेण धकारस्य हकारः । स्त्रीशब्दस्य 'स्त्रीभगिनीदुहितृवनितानां इत्थिबहिणीधूआविलआ' इति प्राकृतसूत्रेण इत्थिआदेशे कप्रत्ययस्य कलोपः । सार्थस्येत्यत्र 'संयोगे' इति ह्रस्वः । धिक्प्रहसनं हासहेतुभूतं त्वदीयवचः । निन्दनीयमिति भावः । दारान् कौसल्याप्रभृतीन् । अधि-

१ 'तपोधणाणं' इति क्वचिन्न लभ्यते । २ 'ठविरसत्थस्स' इति पा० । ३ 'दाण्डायनः', 'भाण्डायनः' इत्यपि पाठौ । ४ 'वाग्घो वा विओ वा' इति पा० ।

**दण्डायनः**—आः, किमुक्तं भवति ? ।

**सौधातकिः**—*जेण परावडिदेण एव्व सा वराई कविला कल्लाणी बलामोडिअ मडमडाइआ ।

**दण्डायनः**—समांसो मधुपर्क इत्याम्नायं बहुमन्यमानाः श्रोत्रियायाभ्यागताय वत्सतरीं महोक्षं[1] वा पचन्ति गृहमेधिनः । तं हि धर्मं धर्मसूत्रकाराः समामनन्ति ।

**सौधातकिः**—†भो, णिगिहीदोसि ।

**दण्डायनः**—कथमिव ? ।

**सौधातकिः**—‡जेण आअदेसु वसिट्ठमिस्सेसु वच्छदरी विससिदा । अज्ज एव्व पच्चाअदस्स राएसिणो जणअस्स भअवदा वम्मीइणा धहिमहूहिं एव णिव्वत्तिदो महुवक्को । वच्छतरी उण विसज्जिदा ।

**दण्डायनः**—अनिवृत्तमांसानामेवं कल्पं [2]व्याहरन्ति केचित् । निवृत्तमांसस्तु तत्रभवान् जनकः ।

---

* येन परापतितेनैव सा वराकी कपिला कल्याणी बलात्कृत्य मडमडायिता ।

† भोः, निगृहीतोऽसि ।

‡ येनागतेषु वसिष्ठमिश्रेषु वत्सतरी विशसिता । अद्यैव प्रत्यागतस्य राजर्षेर्जनकस्य भगवता वाल्मीकिना दधिमधुभ्यामेव निर्वर्तितो मधुपर्कः । वत्सतरी पुनर्विसर्जिता ।

---

छाय । तन्नियामको भूत्वेत्यर्थः । प्रलपसि अनर्थकं वदसि ॥ हुमिति प्रश्ने ॥ अथ किमित्यङ्गीकारे ॥ एष कोऽपि व्याघ्र इति मया ज्ञातमित्यन्वयः । 'ह्रस्वः संयोगे' (है. १।८४) इति ह्रस्वः ॥ किमुक्तं भवति कुत एवमुक्तम् ? ॥ हि तेन वसिष्ठेन हि । वराकी प्रतिकूलदैवा । कपिला नाम गवामवान्तरजातिः । कल्याणी वत्सतरी । द्विहायनीत्यर्थः । बलात्कृत्य मडमडायिता । आलम्भनशब्दानुकरणमिदम् । तथाविधशब्दयुक्ता कृतेत्यर्थः । आलब्धेति यावत् । मडायितेत्यर्थः । मृद्नातेर्मट्टपरिहट्टखडववन्नाजचडभल्लमडा' इति प्राकृतव्याकरणसूत्रेण मृद्धातोर्मड इत्यादेशः । तेन व्याघ्र इति ज्ञातमिति पूर्वेण संबन्धः ॥ आम्नायं धर्मशास्त्रम् । महांश्चासौ उक्षा चेति विग्रहः । निपातनादकारान्तत्वम् । पचन्ति श्रपयन्ति । समामनन्ति उपदिशन्ति । अत्र मया व्याघ्र इत्यादिना गुरुतिरस्कृतिरुपद्रव उक्तः ॥ भो निगृहीतोऽसि पराजितोऽसि ॥ **आगतेष्वेवेति** । मिश्रशब्दः पूज्यताद्योतकः । 'एवार्थे एव्व' इति प्राकृतसूत्रेण एव्वादेशः । दधिमधुभ्यामित्यनेन दधिमधुसंसृष्टमित्यापस्तम्बवचनमभिप्रेतम् । निर्वर्तितः निष्पादितः । वत्सतरी पुनरिति । विसर्जिता मुक्ता । न त्वालब्धेत्यर्थः ॥ **व्याहरन्ति केचिदिति** । केचिद्धर्मशास्त्र-

---

१ 'महाजं वा निर्वपन्ति' इति क्वचिदधिकम् । २ अत्र 'ऋषयः' इत्यधिकं क्वचित् ।

**सौधातकिः**—*किंणिमित्तं ? ।

**दण्डायनः**—यद्देव्याः सीतायास्तादृशं दैवदुर्विपाकमुपश्रुत्य वैखानसः संवृत्तः, [1]तस्य कतिपयसंवत्सरश्चन्द्रद्वीपतपोवने तपस्तप्यमानस्य ।

**सौधातकिः**—†तदो किंति आअदो ? ।

**दण्डायनः**—सं[2]प्रति च प्रियसुहृदं भगवन्तं प्राचेतसं द्रष्टुम् ।

**सौधातकिः**—‡अवि अज्ज संबंधिणीहिं समं णि[3]उत्तं दंसणं से ण वेत्ति ? ।

**दण्डायनः**—संप्रत्येव भगवता वसिष्ठेन देव्याः कौसल्यायाः सकाशं भगवत्यरुन्धती प्रहिता । [4]यथा स्वयमुपेत्य स्नेहादयं द्रष्टव्य इति ।

**सौधातकिः**—§जह एदे ट्ठविरा परप्परं एव्व मिलिदा, तह अम्हे वि वडुहिं सह मिलिअ अणज्झाअमहुस्सवं खेलंतो मणेम्ह । अह कुत्थ सो जणओ ? ।

**दण्डायनः**—तथायं [5]प्राचेतसवसिष्ठावुपास्य संप्रत्याश्रमस्य बहिर्वृक्षमूलमधितिष्ठति । य एषः

हृदि नित्यानुषक्तेन सीताशोकेन तप्यते ।
अन्तःप्रसृप्तदहनो जरन्निव वनस्पतिः ॥ २ ॥

(इति निष्क्रान्तौ ।)

**इति मिश्रविष्कम्भः ।**

---

* किंनिमित्तम् ? ।

† ततः किमित्यागतः ? ।

‡ अप्यद्य संबन्धिनीभिः समं निर्वृत्तं दर्शनमस्य न वेति ? ।

§ यथैते स्थविराः परस्परमेव मिलिताः, तथावामपि बटुभिः सह मिलित्वानध्यायमहोत्सव खेलन्तो मानयावः । अथ कुत्र स जनकः ? ।

---

कारा आपस्तम्बादयः । एवंकल्पं मांसवर्जं मधुपर्कानुष्ठानपरग्रन्थं व्याहरन्ति वदन्ति । निवृत्तमांसो वर्जितमांसः ॥ **यद्देव्या इत्यादि** । वैखानसः वानप्रस्थः । चन्द्रद्वीपतपोवने तपस्तप्यमानस्य तपश्चरतः कतिपयः संवत्सरः गत इति शेषः । चन्द्रद्वीप इति कश्चिद्द्वीपविशेषः ॥ प्राचेतसं वाल्मीकिम् ॥ संबन्धिनीभिः दर्शनं निर्वृत्तं न वेति ज्ञायते अपीति योजना ॥ अपि अयम् । जनक इत्यर्थः । स्नेहाद्द्रष्टव्यः प्रेम्णा दर्शनीयः ॥ स्थविरा वृद्धाः । अनध्यायः अध्ययनाभावः स एव महोत्सवः । आनन्दहेतुत्वादुत्सवत्वरूपणम् ॥ उपास्य परिचर्य ॥ **हृदीति** । य एषः । जनक इत्यर्थः ।

---

१ 'कतिपये संवत्सराः' इति पा० । २ 'चिरन्तनप्रियसुहृदं' इति पा० । ३ 'संवुत्तं' इति पा० । ४ 'यत्' इति पा० । ५ 'तथायं ब्रह्मवादी पुराणराजर्षिः' इत्यधिकं क्वचित् ।

(ततः प्रविशति जनकः ।)

**जनकः**—

अपत्ये यत्तादृग्दुरितमभवत्तेन महता
विषक्तस्तीव्रेण व्रणितहृदयेन व्यथयता ।
पटुर्धारावाही नव इव चिरेणापि हि न मे
निकृन्तन्मर्माणि क्रकच इव मन्युर्विरमति ॥ ३ ॥

कष्टं एवं नाम जरया दुःखेन च दुरासदेन भूयः पराकसांतपनप्रभृतिभिस्तपोभिः[1] शोषितान्तःशरीरधातोरवष्टम्भ एव महानद्यापि मम दग्धदेहो न पतति । अन्धतामिस्रा ह्यसूर्या नाम ते लोकाः प्रेत्य तेभ्यः प्रतिविधीयन्ते य आत्मघातिन इत्येवमृषयो मन्यन्ते । अनेकसंवत्सरातिक्रमेऽपि प्रतिक्षणपरिभावनास्पष्टनिर्भासः प्रत्यग्र इव न मे दारुणो दुःखसंवेगः प्रशाम्यति । अयि मातः देवयजनसंभवे सीते, ईदृशस्ते निर्माणभागः परिणतः, येन लज्जया स्वच्छन्दमप्याक्रन्दितुं न शक्यते ! ।

---

हृदि नित्यानुषक्तेन नित्यलग्नेन सीताशोकेन सीतानिमित्तदुःखेन तप्यते तप्तो भवति । जरन् वृद्धः अन्यः प्रज्वलद्वह्निः वनस्पतिः पुष्पहीनफलवृक्षः ॥२॥ मिश्रविष्कम्भः । संस्कृतप्राकृतात्मकविष्कम्भ इत्यर्थः ॥ **अपत्य इति** । यस्मात् अपत्ये । सीतायामित्यर्थः । तादृग्दुरितं कौलीनरूपपापं व्यसनं वाभवत् । तीव्रेणातिप्रचुरेण तेन दुरितेन व्यथयता दुःखं प्रापितेन व्रणितहृदयेन विषक्तः प्रसक्तः । पटुः तीक्ष्णः । धारया वहतीति धारावाही । अत्यन्तनैरन्तर्येण प्रवाहीत्यर्थः । चिरेणापि चिरकालेनापि नव इव स्थितः मर्माणि हृदयादीनि निकृन्तन् छिन्दन् क्रकच इव कराल इव स्थितः । मन्युः शोकः कोपो वा न विरमति न शाम्यति ॥ ३ ॥ जरया वयोहान्या । दुरासदेन दुःसहेन । दुःखेन सीताविश्लेषजेन । पराको द्वादशदिनोपवासकृच्छ्रम्, सांतपनं चान्द्रायणविशेषः, एवमादिभिः कायशोषकनियमविशेषैः शोषितान्तःशरीरधातोर्मे कथमवष्टम्भ एव पातप्रतिबन्धकावलम्बनमेव । दग्धदेहः हतहृदयमितिवत् निन्दायां दग्धशब्दः । अद्यापि न पततीति योजना । अनेकसामग्रीसमवधानेऽपि पाताभावो विस्मयनीय इति भावः । तर्हि भृगुपतनादिना त्यज्यतामित्यत्राह-**अन्धतामिस्रा इति** । आत्मानं घ्नन्तीति आत्मघातिन इति विग्रहः । 'सुप्यजातौ' (३।२।७८) इति णिनिः । ये बलात्क्रियन्ते तेभ्यः तान् पातयितुम् । क्रियार्थे चतुर्थी । असूर्या सूर्यरहिता अन्धतामिस्रा अन्धतमसमयास्ते प्रसिद्धा लोका नरकविशेषाः प्रेत्य मरणानन्तरं प्रतिविधीयन्ते इत्येवमृषयो मन्यन्ते । 'असूर्या नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' इति श्रुतिः । इति धर्मशास्त्रकाराणां मतम् । प्रतिक्षणपरिभावनया संततविचारेण 'भू अवकल्कने' । अवकल्कनं चिन्तनम् । स्पष्टनिर्भासः विशदप्रकाशः । प्रत्यग्र इव नव्य इव

---

१ 'आत्तरसधातुरनवष्टम्भो नाद्यापि' इति पा० ।

हा पुत्रि,

अनियतरुदितस्मितं विराज-
त्कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमञ्जु जल्पितं ते ॥ ४ ॥

भगवति वसुंधरे, सत्यमतिदृढासि ! ।

त्वं वह्निर्मुनयो वसिष्ठगृहिणी गङ्गा च यस्या विदु-
र्माहात्म्यं यदि वा रघोः कुलगुरुर्देवः स्वयं भास्करः ।
विद्यां वागिव यामसूत भवती शुद्धिं[1] गतायाः पुन-
स्तस्यास्त्वद्दुहितुस्तथाविशसनं किं दारुणे मृष्यथाः ॥ ५ ॥

---

न प्रशाम्यति न नश्यति । निर्माणभागः सृष्टिफलम् । येन निर्माणभागेनाक्रन्दितुमपि रोदितुमपि । अपिशब्दाक्रियान्तरानर्हत्वं सूच्यते । दोषवादहेतुकत्वात्त्यागस्येति भावः । **अनियतेति** । अनियतरुदितस्मितं अव्यवस्थितरोदनहासनम् । विराजन्तः कतिपये त्रिचतुराः कोमला ललिताः दन्ता एव कुड्मलाग्राणि यस्य तथोक्तं तेन कुड्मलाग्रशब्दस्य न पूर्वनिपातः । न वा दन्तशब्दस्य दतादेशः । स्खलदपूर्णमसमञ्जसं पूर्वापरसंगतिरहितं मञ्जु सुन्दरं जल्पितं वचनं यस्य तत्तथोक्तं ते वदनकमलकं वदनमेव कमलम् । अनुकम्पायां कन् । स्मरामि उत्कण्ठापूर्वकं चिन्तयामि । अत्रानियतरुदितस्मितं स्खलदसमञ्जसमिति विशेषणानुगुण्याद्वदनकमलकमित्यत्र परिणामालंकारः । केवलकमलस्य प्रकृतक्रियान्वयित्वानुपपत्तेः । 'परिणामः क्रियार्थश्चेद्विषयी विषयात्मना' इति लक्षणात् । दन्तकुड्मलाग्रमित्यत्रापि क्रियान्वयविवक्षायां परिणामः रूपकं वा ॥ ४ ॥ **भगवतीति** । अतिदृढासि कठिनासीति सत्यम् । अत्र 'यो वा बिभर्ति काठिन्यं तस्मै भूम्यात्मने नमः' इति वचनं द्रष्टव्यम् । तव वसुंधरात्वप्रयुक्तधैर्येण पुत्रीनाशोऽप्यकिंचित्कर एवेत्युपालम्भो व्यज्यते । **त्वमिति** । यस्याः सीताया माहात्म्यममानुषत्वं त्वं वेत्थ । विदुरित्यस्य विभक्तिवचनयोर्विपरिणामेन योजना । वह्निर्वेद, मुनयो विदुः, वसिष्ठगृहिणी अरुन्धती वेद जानाति, गङ्गा च वेद जानाति । यदि वा किंच रघोः कुलगुरुः रघुवंशजनकस्तदाचार्यो वसिष्ठो वा । देवः दीप्तिशीलः भास्करः स्वयं वेद परानपेक्षं जानाति । अत्र भूम्यादीनामन्योन्यनिरपेक्षप्रामाण्यप्रतिपत्त्यर्थं क्रियैकशेषाकरणाद्विदुरित्यत्र न मध्यमपुरुषः प्रयुक्तः । अत एव पुरुषवचनविपरिणामेन भिन्नानि वाक्यानि । यां प्रसूतवती तस्यास्तथाविधायाः पुनः शुद्धिं गतायाः अग्निप्रवेशादित्यर्थः । त्वद्दुहितुः सीतायास्तथाविशसनमन्यादृशहिंसनं किं मृष्यथाः कथं सोढवत्यसि ॥ ५ ॥ गृष्टिः दशरथकञ्चुकी तेन । निरूप्य हेतुभिर्विचार्य । इयं सैवेति एतां कः प्रत्येति प्रत्यभिजानाति । नाम प्रसिद्धौ । न कोऽपीत्यर्थः ।

---

१ 'त्वद्दत्तु या दैवतं' इति पा०

इत इतो भगवतीमहादेव्यौ ।

**जनकः**—अये, गृष्टिनोपदिश्यमानमार्गा भगवत्यरुन्धती (उत्थाय ।) का पुनर्महादेवीत्याह । (निरूप्य ।) हा हा, कथमयं महाराजस्य दशरथस्य धर्मदाराः प्रियसखी मे कौसल्या ! । क एतां प्रत्येति सैवेयमिति नाम ? ।

आसीदियं दशरथस्य गृहे यथा श्रीः
श्रीरेव वा किमुपमानपदेन सैषा ।
कष्टं बतान्यदिव दैववशेन जाता
दुःखात्मकं किमपि भूतमहो विकारः[1] ॥ ६ ॥

य एव मे जनः पूर्वमासीन्मूर्तो महोत्सवः ।
क्षते क्षारमिवासह्यं जातं तस्यैव दर्शनम् ॥ ७ ॥

(ततः प्रविशत्यरुन्धती कौसल्या कञ्चुकी च ।)

**अरुन्धती**—ननु ब्रवीमि द्रष्टव्यः स्वयमुपेत्यैव वैदेह इत्येवं[2] वः कुलगुरोरादेशः । अत एव चाहं प्रेषिता । तत्कोऽयं पदे पदे महाननध्यवसायः ।

**कञ्चुकी**—देवि, संस्तभ्यात्मानमनुरुध्यस्व भगवतो वसिष्ठस्यादेशमिति विज्ञापयामि ।

**कौसल्या**—*ईरिसे काले मिहिलाहिवो मए दिट्ठव्वो त्ति समं एव्व सव्वदुक्खाइं ओदरंति[3] । ता ण सक्कुणोमि उव्वट्टमाणमूलबंधणं हिअअं पज्जवत्थावेदुं ।

---

* ईदृशे काले मिथिलाधिपो मया द्रष्टव्य इति सममेव सर्वदुःखान्यवतरन्ति । तस्मान्न शक्नोम्युद्वर्तमानमूलबन्धनं हृदयं पर्यवस्थापयितुम् ।

---

**आसीदिति** । इयं कौसल्या दशरथस्य गृहे श्रीरिवासीदथवा श्रीरेवासीत् । उपमानत्वबोधकयथाशब्देन किम् । न किमपीत्यर्थः । अत्रोपमालंकारः, रूपकालंकारः, आक्षेपालंकारश्च । सैषा श्रीसदृशी श्रीभूता वा इयं कौसल्या दैववशेन दैवेच्छया अन्यदिव जातान्यद्भूतमिव संवृत्ता । अलक्ष्मीरिव जातेत्यर्थः । अत्रेवेति वर्तते । दुःखात्मकं दुःखैकरसं किमपि वाचामपरिच्छेद्यं भूतं प्राणिविशेषः जाता । साक्षादलक्ष्मीः जातेत्यर्थः । यथा श्रीः श्रीरेव वेत्यनयोः प्रतिद्वन्द्वभूतमिदमहो विकारः प्राणिनामुपचयापचयरूपागन्तुको विस्मयनीय इत्यर्थः । कष्टं बतेति दुःखातिशये ॥ ६ ॥ **य इति** । य एष जनः कौसल्या ॥ ७ ॥ आदेशः आज्ञा । अनध्यवसायः संशयः ॥ आत्मानं

---

१ 'विपाकः' इति पा० । २ 'इत्येष' इति पा० । ३ 'समुब्भवंति इति पा० ।

**अरुन्धती**—अत्र कः संदेहः ! ।

संतानवाहीन्यपि मानुषाणां
दुःखानि संबन्धिवियोगजानि ।
दृष्टे जने प्रेयसि दुःसहानि
स्रोतःसहस्रैरिव संप्लवन्ते ॥ ८ ॥

**कौसल्या**—*कहं णु खु वच्छाए मे वहूए वंणगदाए तस्सा पिदुणो राएसिणो मुहं दंसम्ह ? ।

**अरुन्धती**—

एष वः श्लाघ्यसंबन्धी जनकानां कुलोद्वहः ।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥ ९ ॥

**कौसल्या**—†एसो सो महाराअस्स हिअअणिव्विसेसो वच्छाए मे वहूए पिदा विदेहराओ सीरद्धओ । सुमरिदम्हि अणिव्वेदरमणीए दिअसे ! । हा देव्व, सव्वं तं णत्थि ! ।

* कथं न खलु वत्साया मे वध्वा वनगतायास्तस्याः पितू राजर्षेर्मुखं दर्शयामः ।

† एष स महाराजस्य हृदयनिर्विशेषो वत्साया मे वध्वाः पिता विदेहराजः सीरध्वजः । स्मारितास्मि अनिर्वेदरमणीयान्दिवसान् ! । हा देव, सर्वं तन्नास्ति ! ।

धृतिम् । संस्तभ्य प्रतिहतगतिं कृत्वा । अनुरुध्यस्व अनुतिष्ठेत्यर्थः ॥ समं युगपत् । अवतरन्ति प्राप्नुवन्ति । उद्वर्तमानमुद्वृत्तं मूलबन्धनं मूलनियन्त्रणं यस्य तथोक्तम् । शिथिलबन्धनमित्यर्थः । पर्यवस्थापयितुम् ॥ **संतानेति** । संतानेन अविच्छेदेन वाहीनि प्रवहन्त्यपि दुःखानि प्रेयसि जने दृष्टे सतीत्यन्वयः । स्रोतःसहस्रैरनन्तैः स्रोतोभिः । उपलक्षणे तृतीया । संप्लवन्ते महोर्वीभवन्ति ॥ ८ ॥ वध्वाः स्नुषायाः ॥ **एष इति** । यस्मै यं जनकं सार्थयितुम् । 'क्रियार्थ–' ( २।३।१४ ) इति चतुर्थी । ब्रह्मपारायणं स्वरूपे गुणैश्च अनवधिकातिशयब्रह्मत्वयुक्तपरमात्मप्रतिपादकवेदान्तभागं जगौ उपदिदेश । स एष इति योजना ॥ ९ ॥ हृदयनिर्विशेषः । अन्तरङ्ग इत्यर्थः । सीरः ध्वजो यस्य तथोक्तः । अनिर्वेदाश्च ते रमणीयाश्च । न विद्यते निर्वेदश्चित्तग्लानिर्येषु तथोक्ताः । रमणीया आनन्दहेतवः । तथाविधान्दिवसान्स्मारितास्मि दिवसविषयकस्मरणवती कृतास्मि । सर्वमेतदुपलभ्यमानं सर्वं नास्ति असत्कल्पम् । हा दुःख्यते ॥ अभिवादयते । प्रणामेनाशीर्वा-

१ 'एवं गदे' इति पा० । २ 'राएसी' (=राजर्षिः) इति पा० ।

**जनकः**—(उपसृत्य ।) भगवत्यरुन्धति, वैदेहः सीरध्वजोऽभिवादयते ।

यया पूतंमन्यो निधिरपि पवित्रस्य महसः
पतिस्ते पूर्वेषामपि खलु गुरूणां गुरुतमः ।
त्रिलोकीमाङ्गल्यामवनितललीनेन शिरसा
जगद्वन्द्यां देवीमुषसमिव वन्दे भगवतीम् ॥ १० ॥

**अरुन्धती**—अक्षरं ते ज्योतिः प्रकाश्यताम् । स त्वां पुनातु देवः परोरजसां य एष तपति ।

**जनकः**—आर्य गृष्टे, अप्यनामयमस्याः प्रजापालकस्य मातुः ? ।

**कञ्चुकी**—(स्वगतम् ।) निरवशेषमतिनिष्ठुरमुपालब्धाः स्मः । (प्रकाशम् ।) राजर्षे, अनेनैव मन्युना चिरपरित्यक्तरामभद्रदर्शनां नार्हसि दुःखयितुमतिदुःखितां देवीम् । रामभद्रस्यापि दैवदुर्योगः कोऽपि ! । यत्किल समन्ततः प्रवृत्तबीभत्सकिंवदन्तीकाः पौराः । न चाग्निशुद्धिमनल्पकाः प्रतियन्तीति दारुणमनुष्ठितं देवेन ।

**जनकः**—(सरोषम् ।) आः, कोऽयमग्निर्नामास्मत्प्रसूतिपरिशोधने ? । कष्टमेवंवादिना जनेन रामभद्रपरिभूता अपि पुनः परिभूयामहे ! ।

---

चयतीत्यर्थः ॥ **ययेति** । पूतंमन्यः आत्मविषयकपूतत्वप्रकारकज्ञानवान् । त्रिलोकीमाङ्गल्यां लोकत्रयमङ्गलहेतुभूतामुषसमिव प्रातःसंध्यादिदेवतामिव स्थिताम् । अवनितललीनेन शिरसेत्युपलक्षणमष्टाङ्गप्रणामस्य ॥ १० ॥ अक्षरं प्रकृतिपुरुषवत्स्वरूपस्वभावविकाररहितं ज्योतिः स्वयंप्रकाशं प्रकाश्यतां प्रतिभासताम् । 'अक्षरमम्बरान्तधृतेः' 'ज्योतिश्चरणाभिधानात्' इत्यधिकरणद्वयार्थः प्रत्यभिज्ञापितः । देवः जगत्स्रष्ट्यादिलीलावान् । रजसां समस्तदोषजातेभ्यः परः । संबन्धसामान्ये षष्ठी । 'परोरजाः' इति वा पाठः । रजसः पर इति विग्रहः बाहुलकात्समासः पृषोदरादित्वादोकारश्च । य एष तपति स त्वां पुनातु । अनेन 'अन्तस्तद्धर्मोपदेशात्' इत्यधिकरणार्थः सूचितः । परोरजसामित्यनेन 'उदेति ह वै सर्वेभ्यः पाप्मभ्यः' इति श्रुतिश्चोदिता । अनामयमारोग्यम् । प्रजापालकस्य मातुः राममातुः कौसल्यायाः । इदं च साभिप्रायम् । अनामयमित्यनेन एवं दुःखिनी कियच्चिरं जीविष्यतीत्युपालम्भो व्यज्यते ॥ निरवशेषं निःशेषमतिनिष्ठुरं अतिरूक्षम् । अनेनैव मन्युना 'अप्यनामयं प्रजापालकस्य मातुः' इत्यनेन व्यज्यते न क्रोधेन । दैवस्य भवितव्यताया दुर्योगः दुःखजननसन्नाहः । यत्किल यस्माद्धेतोः प्रवृत्ता प्रसृता बीभत्सा जुगुप्सनीया किंवदन्ती जनश्रुतिः येषां तथोक्ताः । किंवदन्ती जनश्रुतिः' इत्यमरः । पौराः पुरे भवाः । तस्माद्दैवदुर्योगः कोऽपीति पूर्वेणान्वयः । अनल्पका अत्यल्पाः । अग्निशुद्धिं न च प्रतियन्ति न विश्वसन्ति च । इति पूर्वोक्ताद्धेतोः दारुणं परित्यागात्मकं रौक्ष्यम् ॥ अग्निशुद्धिरिति क इति योजना । प्रस्ताव इति शेषः ।

१ 'मङ्गल्यां' इति पा० । २ 'पौरजानपदा नाग्निशुद्धिं' इति पा० ।

**अरुन्धती**—(निःश्वस्य।) एवमेतत्। अग्निरग्निरिति वत्सां प्रति लघून्यक्षराणि। सीतेत्येव पर्याप्तम्। हा वत्से!

शिशुर्वा शिष्या वा यदसि मम तत्तिष्ठतु तथा
विशुद्धेरुत्कर्षस्त्वयि तु मम भक्तिं द्रढयति।
शिशुत्वं स्त्रैणं वा भवतु ननु वन्द्यासि जगतां
गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः॥ ११॥

**कौसल्या**—*अहो, समुम्मूलअंति विअ वेअणाओ!। (इति मूर्च्छति।)

**जनकः**—हन्त, किमेतत्!।

**अरुन्धती**—राजर्षे, किमन्यत्?।

स राजा तत्सौख्यं स च शिशुजनस्ते च दिवसाः
स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टे तदखिलम्।
विपाके घोरेऽस्मिन्न खलु न विमूढा तव सखी
पुरंध्रीणां चित्तं कुसुमसुकुमारं हि भवति॥ १२॥

---

* अहो, समुन्मूलयन्तीव वेदनाः!।

---

एवंवादिना अग्निशुद्धिरिति वादिना जनेन परिभूयामहे अवमन्यामहे। उपसर्गवशेन भवतेः कर्मणि लकारः। एतत्परिभूयामहे इत्येतत्। एवं जनकोक्तदशासद्भाव एव। लघून्यक्षराणि लाघवापादकशब्दः। सीतेत्येव पर्याप्तम्। वह्निसीतयोः पावनत्वे समकक्ष्यत्वात्प्रत्युत सीतायाः प्रकर्षात्सीताशब्द एव परिपूर्ण इति भावः। **शिशुरिति**। त्वं मम शिशुर्वा शिष्या वाऽसीति यत् तत्तिष्ठत्विति योजना। विशुद्धेः निर्दोषतायाः उत्कर्षः अतिशयः। तथा भक्तिं अन्यादृशीं पूजनीयताप्रतिपत्तिं त्वयि मम द्रढयति स्थिरां करोति। शिशुत्वं स्त्रैणं स्त्रीत्वं वा। 'स्त्रीपुंसाभ्यां नञ्स्नञौ' (४।१।८७) इति नञ्प्रत्ययः। भवतु स्यात्। ननु तावता वन्द्यात्वहानिः। जगतां वन्द्याऽसि अभिवादनीयासि। नन्वित्यवधारणे। गुणाः गुणिषु अहिंसाशौचमस्तेयमित्याद्युक्तगुणवत्सु पूजास्थानमन्वयव्यतिरेकाभ्यां पूजाप्रयोजकाः। लिङ्गं जटोपवीतादिकं न पूजाप्रयोजकम्॥ ११॥ वेदना दुःखानि। समुन्मूलयन्ति मूलमुत्पाटयन्ति। इति मूर्च्छति मूर्च्छामभिनयति॥ हन्त किमेतत्!। शस्त्राभिघातादिकमन्तरा मूर्च्छा विस्मयनीयेत्यर्थः॥ अन्यत्किम्?। वक्ष्यमाणादन्यन्न किमपीत्यर्थः। **स राजेति**। स राजा तत्सौख्यं स च शिशुजनस्ते च दिवसा इति यत्तदखिलं सुहृदि त्वयि दृष्टे सति स्मृतावाविर्भूतं कस्याप्यंशस्य प्रतोषेण स्मृतिविषयीभूतम्। 'सदृशादृष्टचिन्ताद्याः स्मृतिबीजस्य बोधकाः' इत्युक्तेः। घोरे भयंकरे अस्मिन्विपाके प्रकृतसीतात्यागरूपदैवपर्यवसाने तव सखी कौसल्या विमूढा नेति न। अप्यनामयमस्या इत्यादिभवद्वचनभङ्ग्याविष्कृतो भवन्मतरीत्या योऽस्याः कठिनचित्त-

---

१ 'परिलघूनि' इति पा०। २ 'उम्मीलंति' इति पा०।

जनकः—हन्त, सर्वथा नृशंसोऽस्मि ! । यश्चिरस्य दृष्टान्प्रियसुहृदः प्रियदारानस्निग्ध इव पश्यामि ।

स संबन्धी श्लाघ्यः प्रियसुहृदसौ तच्च हृदयं
स चानन्दः साक्षादपि च निखिलं जीवितफलम् ।
शरीरं जीवो वा यदधिकमतोऽन्यत्प्रियतरं
महाराजः श्रीमान्किमपि मम नासीद्दशरथः ॥ १३ ॥

कष्टमियमेव सा कौसल्या ! ।

यदस्याः पत्युर्वा रहसि परमन्त्रायितमभू-
दभूवं दम्पत्योः पृथगहमुपालम्भविषयः ।
प्रसादे कोपे वा तदनु मदधीनो विधिरभू-
दलं वा तत्स्मृत्वा दहति यदवस्कन्द्य हृदयम् ॥ १४ ॥

---

ताप्रयुक्तमूर्च्छाभावो वा नेत्यर्थः । पुरंध्रीणां चित्तं हि यस्मात्कुसुमवन्मृदु तस्माद्विमूढा नेति न ॥ १२ ॥ एवमरुन्धत्या बोधितोऽनुतपति–**हन्तेति** । योऽहं चिरस्य दृष्टान् चिराद्दृष्टान्प्रियसुहृदो दशरथस्य प्रियान्मत्प्रीतिविषयान्मयि प्रीतियुक्तान् हि दारान् कौसल्यामस्निग्ध इव शत्रुरिव पश्यामि शत्रुकर्तृकदर्शनसदृशदर्शनवानस्मि सोऽहं सर्वप्रकारेण क्रूरोऽस्मि ! । हन्त अनुतप्यते ! । **स संबन्धीत्यादि** । श्रीमान् लक्ष्मीवान्महाराजः सार्वभौमः स दशरथः मम श्लाघ्यः संबन्धी अभूत् । असौ संबन्धीभूतो दशरथः प्रियसुहृदभूत् प्रीतिमान् शोभनहृदयवांश्चाभूत् । 'सुहृद्दुर्हृदौ मित्रामित्रयोः' (५।४।१५०) इति हृदयशब्दस्य हृदादेशः । तदन्तरङ्गत्वेन प्रसिद्धं हृदयं चाभूत् । चकारेण संबन्धिसुहृत्त्वसमुच्चयः । तदिति दशरथपरं विधेयप्राधान्यात्क्लीबत्वम् । एवं च तत् संबन्धिसुहृद्भूतदशरथः हृदयं चाभूदिति वा । स पूर्वोक्तत्रयात्मा दशरथः साक्षादानन्दश्च । साक्षाच्छब्देनानन्दहेतावानन्दत्वात्कोपो व्यावर्तते । साक्षान्मुख्य इत्यर्थः । निखिलं जीवितफलमपि च कर्मज्ञानभक्तिरूपं जीवनप्रयोजनं च । चकारः पूर्वसमुच्चायकः । शरीरमभूद्दुर्लभो मानुषो देह इत्युक्तं शरीरं चाभूत् । सकलधर्मसाधनत्वात् । जीवो वाभूत् जीवश्चाभूत् । तस्य हि ज्ञानानन्दमयत्वात्प्रेमास्पदत्वम् । अतो जीवादधिकं समस्तकल्याणगुणामृतोदधित्वेनानन्दमयत्वेन च प्रकृष्टं प्रियतरं प्रियो जीवः प्रियतरं ब्रह्म तथाविधं यत्परं ब्रह्म तदभूत् । यत एवं ततः किं नाभूत् ? । सर्वमप्यभूदित्यर्थः । लोके संबन्धिसुहृदादीनां तत्तन्मात्रत्वमस्य तु सर्वदा सर्वविधत्वमिति भावः ॥ १३ ॥ **यदस्या इति** । अस्या वा पत्युर्दशरथस्य वा यत्परमन्त्रायितमभूद्रहसि गुप्तभाषणं विचारो वा जातः । आचारणिजन्तात्कर्तरि क्तः । तत्राहं दम्पत्योर्जायापत्योः पृथगुपालम्भविषयोऽभूवं परस्परपरिहारेण परस्परविषये अयमेवमुक्तवानयमेवं कृतवानियमेवमुक्तवती इयमेवं कृतवतीत्यादिपरस्परापराधकथनपात्रमासम् । 'परमत्याहितमभूत्' इति पाठोऽपि दृश्यते । प्रणयकलहरूपजीवनापेक्षकर्मेति तदर्थः । शेषं पूर्ववत् । तदनु उपालम्भानन्तरं

---

१ 'दारान्न स्निग्धं' इति पा० । २ 'परमं दूषितमभूत्' इति पा० ।

अरुन्धती—हा कष्टम्! । अतिचिरनिरुद्धनिःश्वासनिष्पन्दं[1] हृदयमस्याः ।

जनकः—हा प्रियसखि! । (इति कमण्डलूदकेन सिञ्चति ।)

कञ्चुकी—

सुहृदिव प्रकटय्य सुखप्रदां[2]
प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणः
परिशिनष्टि विधिर्मनसो रुजम्[3] ॥ १५ ॥

कौसल्या—(आश्वस्य ।) *हा वच्छे जाणइ, कहिं सि? । सुमरामि दे णवविवाहलच्छीपरिग्गहेक्कमंगलं[4] संफुल्लमुद्धमुहपुंडरीअं आरुहंतकौमुदीचंदसुंदरं! । एहि मे पुणो वि जादे, उज्जोएहि उच्छंगं । सव्वदा महाराअ एव्वं भणादि । एसा रहुउलमहत्तराणं वहू अम्हाणं दु जणअसुदा दुहिदेव्व ।

---

* हा वत्से जानकि, कुत्रासि? । स्मरामि ते नवविवाहलक्ष्मीपरिग्रहैकमङ्गलं संफुल्लमुग्धमुखपुण्डरीकमारुहत्कौमुदीचन्द्रसुन्दरम्! । एहि मे पुनरपि जाते, उद्द्योतयोत्सङ्गम् । सर्वदा महाराज एवं भणति । एषा रघुकुलमहत्तराणां वधूरस्माकं तु जनकसुता दुहितैव ।

---

प्रसादानुष्ठानं कोपानुष्ठानं वा । मदधीनमभूदित्यर्थः । स्मृत्वाऽलम् । तत्स्मरणेन साध्यं नास्तीत्यर्थः । यद्धृदयमवस्कन्द्याक्रम्य दहति भस्मीकरोति । तत्स्मृत्वाऽलं कोपप्रसादयोरन्यविषयत्वं च पाठद्वये क्रमाद्विवक्षितम् । तत्र हि परस्परेत्युक्तिरुपलक्षणार्था ॥१४॥ निरुद्धाः संचाररहिताः श्वासाः प्राणवायवो यस्मिन् तथोक्तं निष्पन्दं च ॥ सुहृदिति । विधिः प्रथममादौ सुहृदिव मित्रमिव सुखप्रदामेकरसामेकप्रकारामनुकूलतां योगक्षेमहेतुभूतां प्रकटय्य प्रकाशयित्वा पुनरनन्तरमकाण्डेन निर्निमित्तेन विवर्तनेन व्यत्यस्तपरिपाकेन दारुणः सन् क्रूरः सन्मनसो रुजं हृदयपीडां परिशिनष्टि परिशिष्टां करोति । अकाण्डनिवर्तनेन दारुणोऽकाण्डनिवृत्तो भूत्वेत्यप्याहुः । सुहृदपि त्यक्त्वा गतश्चेन्मनःपीडां करोतीति साम्यम् ॥ १५ ॥ नवविवाहलक्ष्म्याः परिग्रहेण एकं मुख्यं मङ्गलं यस्य तथोक्तम् । कौमुद्यां कृत्तिकापौर्णमास्यां भवश्चन्द्रः कौमुदीचन्द्रः । आरोहन्ती प्रादुर्भवन्ती या कौमुदी चन्द्रचन्द्रिका तद्वत्सुन्दरमङ्गं यस्यास्तथोक्ताम् । उत्सङ्गमङ्कमुद्द्योतय उपवेशेन प्रकाशय । सर्वदा सर्वस्मिन्काले महाराजो दशरथः । एषा सीता रघुकुले महत्तरा ये मनुप्रभृतयस्तेषां वधूः स्नुषा । जनकसुता सीता अस्माकं तु मम तु दुहितैव मदभिप्रायेण दुहितैवेत्येवं भणति ॥ देवी कौसल्या यथाह तथैवेति शेषः ।

---

१ 'निष्पन्दं' इति पा० । २ 'सुखप्रदः' इति पा० । ३ 'विधिरहो विशिनष्टि मनोरुजं' इति पा० । ४ '°मंडणं पप्फुरंतमुद्धविहसिदं' इति पा० ।

**कञ्चुकी**—यथाह देवी ।

पञ्चप्रसूतेरपि तस्य राज्ञः
प्रियो विशेषेण सुबाहुशत्रुः ।
वधूचतुष्केऽपि [1]तथैव नान्या
प्रिया तनूजास्य [2]यथैव सीता ॥ १६ ॥

**जनकः**—हा प्रियसख महाराज दशरथ, एवमसि सर्वप्रकारहृदयंगमः ! । कथं विस्मर्यसे ? ।

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनं
संबन्धे विपरीतमेव तदभूदाराधनं ते मयि ।
त्वं कालेन तथा[3]विधोऽप्यपहृतः संबन्धबीजं च त-
द्घोरेऽस्मिन्मम जीवलोकनरके पापस्य धिग्जीवितम् ॥ १७ ॥

**कौसल्या**—*जादे जाणइ, किं करेमि ! । दिढवज्जलेवपडिबद्धणिच्चलं हदजीविदं मं मंदभाइणीं ण पडिच्चअदि ! !

---

* जाते जानकि, किं करोमि ! । दृढवज्रलेपप्रतिबन्धनिश्चलं हतजीवितं मां मन्दभागिनीं न परित्यजति ! ।

---

**पञ्चप्रसूतेरिति** । पञ्च प्रसूतयः पुत्राः यस्य तथोक्तस्यापि । तस्य राज्ञः पङ्क्तिरथस्य सुबाहुशत्रुः रामः विशेषेण प्रिय इष्टः । पञ्च प्रसूतयो यस्मिन् वृन्दे इति वा विग्रहः । निर्धारणे षष्ठी । 'तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य' इति पाक्षिकः पुंवद्भावः । पञ्चानां मध्ये रामः प्रिय इत्यर्थः । रामादयश्चत्वारः शान्ता चेति पञ्च । वधूचतुष्केऽपि सीतादिस्नुषाचतुष्टयेऽपि अस्य जनकस्य तनूजा सीता यथा तस्य राज्ञो दशरथस्य प्रिया तथा अन्या ऊर्मिलाप्रभृतिः राज्ञः प्रिया न । अस्य तनूजा सीतेत्यनेन सीताया एव जनकाभिसंधिना तनूजात्वं नान्यासामिति व्यज्यते । वधूचतुष्केऽपीति निर्धारणे सप्तमीदर्शनात् ॥ १६ ॥ सर्वैः प्रकारैर्धर्मैः हृदयंगमः । **कन्याया इति** । संबन्धे कन्यावरसंबन्धे । कन्यायाः पितरो जनन्यः जनकाश्च जामातुर्वरस्याप्तं संनिहितबन्धुं जनं पूजयन्ति किल संभावयन्तीति प्रसिद्धम् । तदाराधनं पूजनं ते मयि विपरीतमभूत् । त्वत्कर्तृकमद्विषयकपूजनं सत् प्रतिलोमं जातमित्यर्थः । तथाविधोऽपि त्वं कालेनापहृतः मया पूज्यमानं भवन्तं द्रष्टुं न्याय्यं तावद्भाग्याभावेऽपि केवलं वा भवन्तं द्रष्टुं मदीयदैवदुर्विपाको नाक्षम्यतेति भावः । संबन्धबीजं सीता चापहृतं लिङ्गविपरिणामः । पूर्वोक्तयोरभावेऽपि तादृशभवदभिमता सीतापि दैवेन नाक्षम्यतेति भावः । घोरे भयंकरे अस्मिन्नेवंविधबहुदुःखभाजने जीवलोकबिले पापस्य पूजनविपर्यासादिहेतुभूतदुरितप्रचुरस्य मम जीवितं प्राणधारणं धिक् । तत्कर्मिका निन्देत्यर्थः । अत्रेदानीं भवत्पू-

---

१ 'यथा हि शान्ता' इति पा० । २ 'तथैव' इति पा० । ३ '°विधोऽस्य°' इति पा० ।

**अरुन्धती**—आश्वसिहि राज्ञि, बाष्पविश्रामोऽप्यन्तरेषु कर्तव्य एव। अन्यच्च किं न स्मरसि यदवोचदृष्यशृङ्गाश्रमे युष्माकं कुलगुरुर्भवितव्यं तथेत्युपजातमेव, किंतु कल्याणोदर्कं भविष्यतीति?।

**कौसल्या**—*कुदो अदिक्कंदमणोरहाए मह एदं!।

**अरुन्धती**—तत्किं मन्यसे राजपत्नि, मृषोद्यं तदिति?। न हीदं क्षत्रिये मन्तव्यम्।

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयोऽभूत्।
भद्रा ह्येषां वाचि लक्ष्मीर्निषक्ता[2]
नैते वाचं विप्लुतार्थां वदन्ति॥ १८॥

(नेपथ्ये कलकलः। सर्वे आकर्णयन्ति।)

**जनकः**—अये, अद्य खलु शिष्टानध्ययन इत्यस्खलितं खेलतां बटूनां कोलाहलः[3]।

---

* कुतोऽतिक्रान्तमनोरथाया ममैतत्!।

---

जाद्यभावेऽपि यत्र तल्लाभो लोकान्तरे तत्र गमनस्यापि मदीयजीवनयोनिदुरितप्रतिबन्धकमिति भावः॥१७॥ दृढेन वज्रलेपेन बन्धकद्रव्यलेपेन यः प्रतिबन्धो विश्लेषानुत्पादस्तेन निश्चलं हतजीवितं निन्द्यजीवितम्॥ आश्वसिहि आश्वासं दुःखलघूकरणं प्राप्नुहि। बाष्पस्य दुःखाश्रुणः विश्रामो विच्छेदोऽपि। अपिशब्देन बाष्पादिकं समुच्चीयते। अन्तरेषु मध्ये मध्ये। अन्यच्च बाष्पविश्रामादन्यदपि। यत्कुलगुरुर्वसिष्ठः अवोचत्तन्न स्मरसि किम्?। भवितव्यं तथेति परित्यागरूपेण भवनमपरिहार्यमिति हेतोः। उपजातमापाततो जातम्। न त्वन्ततस्तथेत्यर्थः। कल्याणोदर्कं मङ्गलपर्यवसायि भविष्यतीति यदवोचत्तन्न स्मरसि किम्?। अतिक्रान्तमनोरथाया असंभाव्याभिलाषविषयायाः॥ मृषोद्यमिति मिथ्यावचनमिति। **आविर्भूतेति**। आविर्भूतज्योतिषां परज्योतिर्विषयकापरोक्षज्ञानवतां ब्राह्मणानां विप्राणां ये व्याहारा उक्तयस्तेषु संशयः प्रामाण्यसंदेहो मा भूत् नोत्पत्तुमर्हः। हि यस्मादेषां ब्राह्मणानां वाचि भद्रा मङ्गलकरी लक्ष्मीः अर्थोपधायकत्वातिशयः। निषक्ता नित्यसङ्गिनी भवति। एते आविर्भूतज्योतिषो ब्राह्मणाः विप्लुतार्थामसदर्थां वाचमेकामपि गिरं न वदन्ति नोच्चारयन्ति। पूर्वत्र बहुवचनं तदीयसर्ववाचामपि प्रामाण्यबोधनार्थम्, अत्रैकवचनं तु तदीययत्किंचिद्वचोऽप्यप्रामाण्यं नेति बोधनार्थमिति द्रष्टव्यम्। अत्र श्लोके 'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत। अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि॥'

---

१ 'राजपुत्रि' इति पा.। २ 'निषिक्ता' इति पा.। ३ 'कलकलः' इति पा.।

**कौसल्या**—*सुलहसोक्खं दाणिं बालत्तणं होदि । (निरूप्य ।) अम्महे, एदाणं मज्झे को एसो रामभद्दस्स कौमारलच्छीसावट्ठम्भेहिं मुद्धललिदेहिं अंगेहिं दारओ अम्हाणं लोअणे सीअलावेदि ।

**अरुन्धती**—(स्वगतम् । सहर्षोत्कण्ठम् ।) इदं नाम भागीरथीनिवेदितं रहस्यकर्णामृतम् । न त्वेवं विद्मः कतरोऽयमायुष्मतोः कुशलवयोरिति । (प्रकाशम् ।)

कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो
बटुपरिषदं पुण्यश्रीकः श्रियैव सभाजयन् ।
पुनरपि शिशुर्भूत्वा वत्सः स मे रघुनन्दनो
झटिति कुरुते दृष्टः कोऽयं दृशोरमृताञ्जनम् ॥ १९ ॥

**कञ्चुकी**—नूनं क्षत्रियब्रह्मचारी दारकोऽयमिति मन्ये ।

**जनकः**—एवमेतत् । अस्य हि

चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।

---

* सुलभसौख्यमिदानीं बालत्वं भवति । अहो, एतेषां मध्ये क एष रामभद्रस्य कौमारलक्ष्मीसावष्टम्भैर्मुग्धललितैरङ्गैर्दारकोऽस्माकं लोचने शीतलयति ।

---

इति श्रुतिः स्फोरिता ॥१८॥ शिष्टागमनप्रयुक्ताध्ययनाभावः शिष्टानध्ययनः ॥ सुलभं सौख्यं यस्मिंस्तथोक्तम् । अनेन 'वृद्धो जनो दुःखशतानि भुङ्क्ते' इत्युक्तवार्धकनिन्दा व्यज्यते । रामभद्रस्य कौमारलक्ष्म्या चन्द्रवदाह्लादकारिरामशैशवस्य योऽयमवष्टम्भः आलम्भनं तत्सहितैः । लक्ष्मीपदेन शैशवस्य स्पृहणीयत्वं व्यज्यते । संबन्धशब्दत्वात्सापेक्षत्वेऽपि समासः । मुग्धललितैः सुन्दरसुकुमारैः ॥ हर्षः इष्टागमात्प्रीतिः । उत्कण्ठा आकारादिविषयाभिलाषः । भागीरथीनिवेदितं गङ्गया कथितं रहस्यं गूढं यत्कर्णयोरमृतवद्भोग्यम् । तदिदं नामायुष्मतोः कुशलवयोर्मध्ये कतरोऽयमिति कुश इति वा लव इति वा न विद्मः न जानामि । 'अस्मदो द्वयोश्च' (१।२।५९) इत्येकत्वे बहुवचनम् । **कुवलयेति** । शिखण्डकमण्डनः काकपक्षधरो बटूनां ब्रह्मचारिणां परिषदं सदः श्रिया कान्त्या सभाजयन्नलंकुर्वन् । अमृताञ्जनममृतमयमञ्जनं शीतलत्वादिभिः तद्धि रमणीयमिति कविसमयप्रसिद्धिः ॥ १९ ॥ मन्ये अनुमिनोमि । एतद्भवता संभाव्यमानमेवंवस्तुभूतम् । **चूडाचुम्बितेति** । चूडाचुम्बितानि संयुक्ताग्राणि कङ्कपत्राणि बाणपक्षा यस्मिंस्तथोक्तम् । पृष्ठतोऽभितः पृष्ठे । द्वयोर्भागयोरित्यर्थः । भस्ममयं स्तोकमल्पं पवित्रं पावनं लाञ्छनं पुण्ड्रं यस्य स तथोक्तम् । उरः रौरवीं ऐणेयीं त्वचं धत्ते । मौर्व्यात्मकरशन-

---

१ 'दाव' इति पा० । २ 'तथा हि' इति पा० ।

मौर्व्या मेखलया नियन्त्रितमधो वासश्च माञ्जिष्ठकं
पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥ २० ॥

भगवत्यरुन्धति, किमित्युत्प्रेक्षसे कुतस्त्योऽयमिति ? ।

**अरुन्धती**—अद्यैव वयमागताः ।

**जनकः**—आर्य गृष्टे, अतिकौतुकं वर्तते । तद्भगवन्तं वाल्मीकिमेव गत्वा पृच्छ । इमं च दारकं[1] ब्रूहि वत्स केऽप्येते प्रवयसस्त्वां दिदृक्षव इति ।

**कञ्चुकी**—यदाज्ञापयति देवः । (इति निष्क्रान्तः ।)

**कौसल्या**—*किं मण्णेध ? । एव्वं भणिदो आअमिस्सदि वा ण वेत्ति ।

**जनकः**—भिद्यते वा सद्वृत्तमीदृशस्य निर्माणस्य ।

**कौसल्या**—(निरूप्य ।)†कहं सविणअणिसमिदगिट्ठिवअणो विसज्जिदासेसतरिसदारओ इतोहिमुहं अवसरिदो एव्व स वच्छो ? ।

**जनकः**—(चिरं निर्वर्ण्य ।) भोः, किमप्येतत् ? ।

महिम्नामेतस्मिन्विनयशिशिरो मौग्ध्यमसृणो[2]
विदग्धैर्निर्ग्राह्यो न पुनरविदग्धैरतिशयः ।

---

* किं मन्यध्वे ? । एवं भणित आगमिष्यति वा न वेति ।

† कथं सविनयनिशमितगृष्टिवचनो विसर्जिताशेषसदृशदारक इतोऽभिमुखमपसरित एव स वत्सः ? ।

---

या नियन्त्रितं माञ्जिष्ठं मञ्जिष्ठरक्तं वास अधः उरसोऽधस्तात् । क्षत्रियब्रह्मचारिणां मेखलेत्युक्तं 'माञ्जिष्ठं राजन्यस्य' इति च । पाणौ कार्मुकं धनुरक्षसूत्रवलयं जपमालिकावलयम् । अस्तीति शेषः । 'अपरे पैप्पलः' इति पाठे अपरे पाणौ अश्वत्थदण्डः । 'अपरः पैप्पलः' इति पाठे धनुर्दण्डादपरः । अन्य इत्यर्थः ॥ २० ॥ कुतस्त्यः कस्माद्भवः ॥ अतिशयितं कौतुकं विशिष्टवस्तुजिज्ञासौत्कण्ठ्यम् । प्रवयसो वृद्धाः । दिदृक्षवः द्रष्टुमिच्छवः ॥ यदाज्ञापयतीत्यत्र तदनुतिष्ठामीति शेषः । एवं भणितः प्रवयसस्त्वां दिदृक्षव इत्युक्तः सन् आगमिष्यति किमिति मन्यध्वे ? । किं संदिग्धे ॥ ईदृशस्य लोकोत्तरस्य निर्माणस्याकारस्य । निर्मीयते तन्निर्माणम् । कर्मणि ल्युट् । 'कृत्यल्युटो बहुलम्' ( ३।३।११३ ) इत्युक्तेः । सद्वृत्तं सदाचारो भिद्यते वा । छिन्नं भवति किमित्यर्थः । 'कर्मवत्कर्मणा–' ( ३।१।८७ ) इति यगात्मनेपदे ॥ सविनयं निशमितं श्रुतं गृष्टिवचनं येन तथोक्तः ॥ एतद्वक्ष्यमाणं किमपि अपूर्वमित्यर्थः । तदाह—**महिम्नामित्यादि** । विनयेन ज्ञानवृद्धशीलवृद्धसन्निधौ स्वनिकर्षपर्यवसाय्यवस्थानेन शिशिरः शीतलः । मौग्ध्येन बाल्येन मसृणः पौरुषरहितः । विदग्धैः सूक्ष्मदर्शिभिर्निर्ग्राह्यो निर्णेयः । अविदग्धैः पुनर्न ग्राह्यो निर्णेतुमशक्यः एतस्मिन्महिम्नामतिशयः लवनिष्ठप्रकृष्टज्ञानतेजःप्रकृतिगुणादिमाहात्म्यानामुत्कर्षः । संमोहेन

---

१ 'बालकं' इति पा० । २ 'शिशुतामौग्ध्यमसृणो' इति पा० ।

मनो मे संमोहस्थिरमपि हरत्येष बलवा-
नयोधातुं यद्वत्परिलघुरयस्कान्तशकलः ॥ २१ ॥

**लवः**—(प्रविश्य ।) [1]अविज्ञातवयाक्रमौचित्यात्पूज्यानपि सतः कथमभिवादयिष्ये ? । (विचिन्त्य ।) अयं पुनरविरुद्धः प्रकार इति वृद्धेभ्यः श्रूयते । (सविनयमुपसृत्य ।) एष वो लवस्य शिरसा प्रणामपर्यायः ।

**अरुन्धतीजनकौ**—कल्याणिन्, आयुष्मान्भूयाः ! ।

**कौसल्या**—*जाद, चिरं जीव ! ।

**अरुन्धती**—एहि वत्स । (लवमुत्सङ्गे गृहीत्वा । आत्मगतम् ।) दिष्ट्या न केवलमुत्सङ्गश्चिरान्मनोरथोऽपि मे पूरितः ।

**कौसल्या**—†जाद, इदो वि दाव एहि । (उत्सङ्गे गृहीत्वा ।) अम्महे, ण केवलं दरविप्पट्टकंदोट्टमंसलुज्जलेण देहबंधणेण कवलिदारविंदकेसरकसाअकंठकलहंसघोरसघग्घराणुणादिणा सरेण अ रामभद्दं अणुसरेदि । णं कठोरकमलगब्भपम्मलसरीरप्पस्सो वि तारिसो एव्व । जाद,

* जात, चिरं जीव ! ।

† जात, इतोऽपि तावदेहि । अहो न केवलं दरविस्पष्टकुवलयमांसलोज्ज्वलेन देहबन्धनेन कवलितारविन्दकेसरकषायकण्ठकलहंसघोषघर्घरानुनादिना स्वरेण च रामभद्रमनुसरति । ननु कठोरकमलगर्भपक्ष्मलशरीरस्पर्शोऽपि तादृश एव ।

मूर्च्छया स्थिरमपि काष्ठवन्निष्पन्दमपि मे मनश्चित्तं परिलघुरयः अल्पस्कान्तशकलः अयस्कान्तखण्डः अयोधातुं यद्वल्लोहपिण्डमिव हरति कर्षति । अत्र विनयशिशिरो मौग्ध्यमसृण इत्याभ्यां सलिलहिमोपष्टम्भेन ज्योत्स्नीभवतां सूर्यतेजसां सादृश्यं व्यज्यते ॥ २१ ॥ क्रमः सत्काराद्यानुपूर्व्यं वयः स्थाविरादिकं वयःक्रमस्तस्यौचित्यं प्राप्तता ज्ञातं च तद्वयःक्रमौचित्यं तस्याभावः अज्ञातवयःक्रमौचित्यम् । अर्थाभावे अव्ययीभावः । अपञ्चम्या इति प्रतिषेधादम्भावो न । तथा च वयःक्रमौचित्यज्ञानाभावादित्यर्थः । कथमभिवादयिष्ये केन क्रमरूपप्रकारेण नमस्करिष्ये । अविरुद्धः अविपरीतः । प्रकारोऽनुष्ठानविशेषः । सामान्यवृद्धविषयकप्रणामकरणरूप इति भावः । सभायां प्रत्येकं न नमस्कुर्यादिति गौतमस्मरणमिहाभिप्रेतम् ॥ उत्सङ्गे अङ्के ॥ दिष्ट्येत्यानन्दे । उत्सङ्गः केवलं न पूरितः किंतु मनोरथोऽपि पूरित इत्यर्थः ॥ जातेति संबोधनम् । विप्पट्टमिति विस्तृतवाचकम् । कन्दोट्टशब्दः कुवलयवाची । घर्घरश्च कांस्यध्वनिस्तद्वदनुकरणं तथाविधेन । अनुसरति अनुकरोति । कठोरस्य समग्रस्य कमलस्य गर्भवदान्तरपत्रवत्पक्ष्मलः स्फीतः तादृश एव रामभद्रास्पर्शसदृश एव । चुबुकमधराधोदेशम् । निपुणं निरूप्यमाणः हेतुभिः पटुतरं विचार्यमाणः अयमिति शेषः । मुखं

१ 'अज्ञातनामक्रमाभिजनान्' इति पा० । २ 'संपूर्णः' इति पा० ।

पेक्खामि दे मुहपुंडरीअं। (चुबुकमुन्नमय्य निरूप्य सबाष्पाकूतम्।) राएसि, किं ण पेक्खसि णिउणं णिरूवज्जंतो वच्छाए मे वहूए मुहचंदेण वि संवेददि एव्व।

**जनकः**—पश्यामि सखि, पश्यामि।

**कौसल्या**—*अम्महे, उम्मत्तीभूदं वि अ मे हिअअं कुदोमुहं विलवदि।

**जनकः**—

वत्सायाश्च रघूद्वहस्य च शिशावस्मिन्नभिव्यज्यते
[1]संवृत्तिः प्रतिबिम्बितेव निखिला सैवाकृतिः सा द्युतिः।
सा वाणी विनयः स एव सहजः पुण्यानुभावोऽप्यसौ
हा हा [2]देवि किमुत्पथैर्मम मनः पारिप्लवं धावति॥ २२॥

**कौसल्या**—†जाद, अत्थि दे मादा, सुमरसि वा तादम्?।

**लवः**—नहि।

**कौसल्या**—‡तदो कस्स तुमं?।

जात, पश्यामि ते मुखपुण्डरीकम्। राजर्षे, किं न पश्यसि निपुणं निरूप्यमाणो वत्साया मे वध्वा मुखचन्द्रेणापि संवदत्येव।

* अहो, उन्मत्तीभूतमिव मे हृदयं किमपीतोमुखं विलपति!।

† जात, अस्ति ते माता, स्मरसि वा तातम्?।

‡ ततः कस्य त्वम्?।

चन्द्रेण संवदत्येव। सीतामुखचन्द्रेति यौगिकसादृश्यप्रमाणविषयो भवति॥ पश्यामि सखि, पश्यामीति आदराद्विरुक्तिः॥ उन्मत्तीभूतमिव विभ्रान्तमिव कुतोमुखम्। यत्र क्वापि असंभाव्यविषये लग्नमिति यावत्। विलपति परिदेवयति। 'विवलते' इति च पाठः॥ **वत्साया इति**। अस्मिन् शिशौ लवे वत्सायाः सीताया रघूद्वहस्य रामचन्द्रस्य च संवृत्तिः। संबन्ध इत्यर्थः। प्रतिबिम्बितेवाभिव्यज्यते अभिव्यक्ता भवति। दर्पणादौ बिम्बवद्दृश्यत इत्यर्थः। निखिला कृत्स्ना आकृतिरवयवस्थानविशेषः सैव सीतारघूद्वहसंबन्धिन्येव द्युतिर्लावण्यं तयोरेव संबन्धिनी। वाणी लवस्य वाक् सा तयोरेव संबन्धिनी। विनयः प्रश्रयः स एव सहजः स्वाभाविकः। पुण्यश्चासौ पावनश्चासौ अनुभावः समीचीनव्यवसायः। असौ सीतारघूद्वहसंबन्ध्येव। अदूरविप्रकृष्टवाच्योऽदःशब्दः। 'अनुभावः प्रभावे च सतां च मतिनिश्चये' इत्यमरः। देवि सीते, मम मनः पारिप्लवं सत् चञ्चलं सत् उत्पथैरमार्गैः धावति अनवस्थितं भवति। हा हा। दुःख्यत इत्यर्थः। देवीत्यनेन देवभूयंगतायास्तव कथमिदं संगच्छत इति व्यज्यते। अत एव ह्युत्पथैरित्यु-

१ 'सम्पूर्णप्रति°' इति पा०। २ 'दैव' इति पा०।

**लवः**—भगवतः सुगृहीतनामधेयस्य वाल्मीकेः ।

**कौसल्या**—*अयि जाद, कहिदव्वं कहेहि ।

**लवः**—एतावदेव जानामि ।

(नेपथ्ये ।)

भो भोः सैनिकाः, एष खलु कुमारश्चन्द्रकेतुराज्ञापयति न केनचिदाश्रमाभ्यर्णभूमय आक्रमितव्या इति ।

**अरुन्धतीजनकौ**—अये, मेध्याश्वरक्षाप्रसङ्गादुपागतो वत्सश्चन्द्रकेतुर्द्रष्टव्य इत्यहो सुदिवसः! ।

**कौसल्या**—†वच्छलक्खणस्स पुत्तओ आणवेदित्ति अमियबिंदुसुंदराइं अक्खराइं सुणीअंदि ।

**लवः**—आर्य, क एष चन्दकेतुर्नाम! ।

**जनकः**—जानासि रामलक्ष्मणौ दाशरथी ? ।

**लवः**—एतावेव रामायणकथापुरुषौ ।

**जनकः**—अथ किम्! ।

**लवः**—तत्कथं न जानामि! ।

**जनकः**—तस्य लक्ष्मणस्यायमात्मजश्चन्द्रकेतुः ।

**लवः**—ऊर्मिलायाः पुत्रस्तर्हि मैथिलस्य राजर्षेर्दौहित्रः ।

**अरुन्धती**—आविष्कृतं कथाप्रावीण्यं वत्सेन ।

**जनकः**—(विचिन्त्य ।) यदि त्वमीदृशः कथायामभिज्ञस्तद्ब्रूहि ताव-

---

* अयि जात, कथितव्यं कथय ।

† वत्सलक्ष्मणस्य पुत्रकः आज्ञापयतीत्यमृतबिन्दुसुन्दराण्यक्षराणि श्रूयन्ते ।

---

कम् ॥ अत्र च 'ऋक्पूरब्धूःपथाम्–' ( ५।४।७४ ) इति समासान्तः ॥ २२ ॥ कस्य त्वम् । कस्माज्जात इत्यर्थः । सुगृहीतं सुष्ठु प्रतिपादितं नामधेयं यस्य तथोक्तस्य वाल्मीकेस्तस्माज्जातः ॥ सैनिकाः सेनासमवायिनः । अभ्यर्णभूमयः समीपदेशाः । ताः नाक्रमितव्या न केनापि स्प्रष्टव्या इति । आज्ञापयतीत्यर्थः ॥ मेध्याश्वस्य यज्ञाङ्गाश्वस्य प्रसङ्गादवश्यानुरोद्धव्यत्वाद्धेतोः द्रष्टव्य इति सुदिवसः । चन्द्रकेतुदर्शनाच्छोभनदिवसोऽयं विस्मयनीय इत्यर्थः ॥ अमृतबिन्दुसुन्दराण्यक्षराणि सुधापृषत इव भोग्याः वर्णाः ॥ दाशरथी दशरथपुत्रौ जानासि किमिति काका योजनीयम् ॥ रामायणकथायाः रामायणनामकवाक्यप्रबन्धस्य पुरुषौ प्रतिपाद्यौ ॥ अथ किमित्यङ्गीकारे ॥ तर्हि ऊर्मिलापुत्रत्वे मैथिलस्य मिथिलाधिपतेः आविष्कृतं प्रकाशितम् । वत्सेन लवेन ॥ कथायामभिज्ञः

त्पश्यामस्तेषां दशरथस्य पुत्राणां कियन्ति किंनामधेयान्यपत्यानि केषु दारेषु प्रसूतानि ।

**लवः**—नायं कथाविभागोऽस्माभिरन्येन वा श्रुतपूर्वः ।

**जनकः**—किं न प्रणीतः कविना ? ।

**लवः**—प्रणीतो न प्रकाशितः । तस्यैव कोऽप्येकदेशः[२] प्रबन्धान्तरेण रसवानभिनेयार्थः कृतः । तं च स्वहस्तलिखितं मुनिर्भगवान्व्यसृजद्भगवतो भरतस्य तौर्यत्रिकसूत्रधारस्य ।

**जनकः**—किमर्थम् ? ।

**लवः**—स किल भगवान्भरतस्तमप्सरोभिः प्रयोजयिष्यतीति ।

**जनकः**—सर्वमिदमाकूततरमस्माकम् ।

**लवः**—महती पुनस्तस्मिन्भगवतो वाल्मीकेरास्था ! । यतः केषांचिदन्तेवासिनां हस्तेन तत्पुस्तकं भरताश्रमं प्रति प्रेषितम् । तेषामनुयात्रिकश्चापपाणिः प्रमादं[३]च्छेदनार्थमस्मद्भ्राता प्रेषितः ।

**कौसल्या**—*जाद, भादावि दे अत्थि ? ।

**लवः**—अस्त्यार्यः कुशो नाम ।

**कौसल्या**—†जेट्ठोत्ति भणिदं होदि ।

---

* जात भ्रातापि तेऽस्ति ? ।

† ज्येष्ठ इति भणितं भवति ।

---

तत्प्रतिपाद्यार्थज्ञानवान् । किंनामधेयानीत्यारभ्य केषु प्रसूतानीत्यन्तस्य ब्रूहीत्यनेनान्वयः । पश्यामः । अस्मज्ज्ञातविषयकत्वद्वचनं शृणुम इत्यर्थः ॥ कथाविभागः कथैकदेशः प्रणीतः किं न प्रबन्धः किं नोक्तः किमिति वा न प्रकाशितः न श्रावितो नाध्यापितश्च ॥ तस्य रामायणस्य कोऽपि अनिर्धारितः एकदेशोंऽशः । स च सप्तमे वक्ष्यमाणान्तर्नाटकार्थक इति ज्ञेयम् । प्रबन्धान्तरेण श्राव्यप्रबन्धातिरिक्तदृश्यप्रबन्धरूपकरूपेण वा रसवान् करुणाद्भुतरसप्रतिपादकः सर्वाकर्णनादितररसप्रतिपादकः अभिनेयः सत्त्वाङ्गिकादिचतुर्विधाभिनयप्रकाश्योऽर्थः अभिधेयः यस्य तथोक्तः कृतः । मुनिर्वाल्मीकिः । तौर्यत्रिकसूत्रधारस्य नृत्तगीतवादित्रशास्त्राचार्यस्य भरतस्य भावरागतालशास्त्राचार्यत्वमूलकत्तदाद्यक्षरघटितभरतनामकस्य तं प्रबन्धं अप्सरोभिः प्रयोज्यकर्तृभिः । प्रयोजयिष्यतीत्येतदर्थम् ॥ सर्वमिदं प्रणीतस्याप्रकाशनं प्रबन्धान्तरेण करणं भरतं प्रति प्रेषणं चाकूततरं गूढार्थकम् ॥ आस्था आवश्यकत्वप्रकारकेच्छा । अनुयात्रिकोऽनुचरः प्रमादस्यानवधानप्रयुक्तप्रतीतस्य च्छेदनार्थं निवृत्त्यर्थमस्मद्भ्राता मत्सहजः ॥ आर्यः पूज्यः ज्येष्ठ इति भणितं भवति अग्रज इति ध्वनितं भवति ॥

---

१ 'पृच्छामः' इति पा० । २ 'सन्दर्भान्त°' इति पा० । ३ 'अपनोदनार्थं' इति पा० ।

**लवः**—एवमेतत् । [1]प्रसवानुक्रमेण स किल ज्यायान् ।

**जनकः**—किं [2]यमावायुष्मन्तौ ? ।

**लवः**—अथ किम् ।

**जनकः**—वत्स, कथय कथाप्रपञ्चस्य [3]कियान्पर्यन्तः ।

**लवः**—अलीकपौरापवादोद्विग्नेन राज्ञा निर्वासितां देवीं देवयजनसंभवां सीतामासन्नप्रसववेदनामेकाकिनीमरण्ये लक्ष्मणः परित्यज्य प्रतिनिवृत्त इति ।

**कौसल्या**—*हा वच्छे मुद्धमुहि, को दाणिं दे सरीरकुसुमस्स झत्ति देव्वदुव्विलासपरिणामो [4]एक्काइणीए निवडिदो ! ।

**जनकः**—हा वत्से,

नूनं त्वया परिभवं च वनं च घोरं
तां च व्यथां प्रसवकालकृतामवाप्य ।
क्रव्याद्गणेषु परितः परिवारयत्सु
संत्रस्तया शरणमित्यसकृत्स्मृतो[5]ऽहम् ॥ २३ ॥

**लवः**—आर्ये, कावेतौ ? ।

**अरुन्धती**—इयं कौसल्या । अयं जनकः । (लवः सबहुमानखेदकौतुकं पश्यति ।)

**जनकः**—अहो निर्दयता दुरात्मनां पौराणाम् ! । अहो रामभद्रस्य क्षिप्रकारिता ! ।

---

* हा वत्से मुग्धमुखि, क इदानीं ते शरीरकुसुमस्य झटिति दैवदुर्विलासपरिणाम एकाकिन्या निपतितः ! ।

---

प्रसवानुक्रमेणोत्पत्तिप्रकारेण । ज्यायान् ज्येष्ठः । यमसाधारणपूर्वजानुजत्वव्यवस्थापकजननानुपूर्व्येण ज्येष्ठ इति भावः ॥ अत एव पृच्छति- **किं यमाविति** ॥ कथाप्रपञ्चस्य कथाविस्तरस्य पर्यन्तोऽवसानम् । यद्वा प्रपञ्चनं प्रकाशनं प्रपञ्चस्तस्य कोऽवधिः ? । कियत्पर्यन्तं प्रकाशित इत्याशयः ॥ अलीको मिथ्याभूतः पौरापवादः पौरकर्तृकदोषकथनं तेनोद्विग्नेन संभ्रान्तेन राज्ञा रामेण निर्वासितां गृहाच्च्यावितां देवयजनसंभवां यागभूमिजातां परित्यज्य लक्ष्मणः प्रतिनिवृत्त इति यत् एष पर्यन्त इति योजना ॥ शरीरकुसुमस्य कुसुमसदृशशरीरस्य । दैवदुर्विलासस्य दैवदुश्चेष्टितस्य परिणामः फलोपधानम् । क इति दुःख्यते ॥ **नूनमिति** । क्रव्याद्गणेषु व्याघ्रादिषु परितः समन्तात्परिवारयत्सु सत्सु मण्डलीकृत्य व्याप्नुवत्सु सत्सु । संत्रस्तया त्वयाहं शरणमिति स्मृतः नूनं संभावये ॥ २३ ॥ दुरात्मनां दुर्बुद्धीनाम् । क्षिप्रकारिता असमीक्ष्यकारित्वम् ॥

---

१ 'प्रसवक्रमेण' इति पा० । २ 'यमजौ' इति पा० । ३ 'कीदृशः' इति पा० । ४ 'एकलिआए' इति पा० । ५ 'अस्मि' इति पा० ।

एतद्वैशसवज्रघोरपतनं शश्वन्ममोत्पश्यतः
क्रोधस्य ज्वलितुं झटित्यवसरश्चापेन शापेन वा ।

**कौसल्या**—(सभयकम्पम् ।) *भअवदि, परित्ताअदु[1] । पसादेहि कुविदं राएसिं ।

**लवः**—
एतद्धि परिभूतानां प्रायश्चित्तं मनस्विनाम् ।

**अरुन्धती**—
राजन्नपत्यं रामस्ते पाल्याश्च कृपणा जनाः ॥ २४ ॥

**जनकः**—
शान्तं वा रघुनन्दने तदुभयं यत्पुत्रभाण्डं हि मे
भूयिष्ठद्विजबालवृद्धविकलस्त्रैणश्च पौरो जनः ॥ २५ ॥

(प्रविश्य संभ्रान्ता बटवः ।)

कुमार कुमार, अश्वोऽश्व इति कोऽपि भूतविशेषो जनपदेष्वनुश्रूयते, सोऽयमधुनास्माभिः स्वयं प्रत्यक्षीकृतः ।

**लवः**—अश्वोऽश्व इति नाम पशुसमाम्नाये सांग्रामिके च पठ्यते, तद्ब्रूत कीदृशः ।

* भगवति, परित्रायताम्, प्रसादय कुपितं राजर्षिम् ।

**एतद्वैशसेति** । एतद्वैशसमेव महाव्यसनमेव वज्रस्याशनेर्घोरं पतनं तीक्ष्णपतनं शश्वदुत्पश्यतो मम क्रोधस्य शापेनानिष्टोपधायकसंकल्पेन चापेन च मारकधनुषा च झटिति ज्वलितुमवसरः प्राप्तकालता । राजर्षित्वादिति भावः ॥ प्रसादय प्रसन्नं कुरु ॥ **एतदिति** । परिभूतानामवमतानां मनस्विनां महामनसां प्रायश्चित्तं कोपप्रतीकारः । एतत् प्रसादनमित्यर्थः ॥ अपत्यं रामः । कृपणजनाश्च ते पाल्याश्च रक्षणीयाः ॥२४॥ **शान्तं वेत्यादि** । वा अथवा । चापेन शापेन च ज्वलनाभावे इत्यर्थः । यद्यस्मात्पुत्रभाण्डं पुत्र एव भाण्डं मूलधनं पुत्रभूतरामात्मकमूलधनम् । भूयिष्ठानि भूयांसि द्विजाः बालाः शिशवः वृद्धाः स्थविराः विकला अन्धबधिरादयः स्त्रैणं स्त्रीसमूहः यस्य स तथोक्तः पौरो जनश्च मे हि मदीयाः किल । तस्मात्तदुभयं चापशापश्च शान्तं भवतु निवृत्तं भवतु । रुषं न दधे कोपं न धारयामि । यद्वा यद्यस्माद्भूयिष्ठद्विजबालवृद्धविकलस्त्रैणः पौरो जनः । चकारेण रामः समुच्चीयते । तदुभयं पौरजनरामात्मकोभयं मे पुत्रभाण्डं पुत्रात्मकमूलधनवन्मम संरक्षणीयं तत्तस्मात् शान्तं क्रोधेन ज्वलित्वा अलं । रुषं न दधे क्रोधं न धारयामि स्थैर्यद्योतनार्थं द्विःकथनम् ॥२५॥ बटवः प्रविश्य । अत्र आहुरिति शेषः । भूतविशेषः प्राणिविशेषः । जनपदेषु कोसलादिदेशेषु । आरण्यकत्वादेवमुक्तिः । श्रूयते शब्दबोधविषयो भवति । प्रत्यक्षीकृतः चक्षुर्विषयीकृतः । पशुसमाम्नाये पशुद्रव्यकयागप्रतिपादकवेदभागे, सांग्रामिके युद्ध-

१ 'परित्ताहि परित्ताहि' इति पा० ।

**बटवः**—अये, श्रूयताम् ।

पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव ।
शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रा-
न्किं [1]व्याख्यानैर्व्रजति स पुनर्दूरमेह्येहि यामः ॥ २६ ॥

(इत्यजिने हस्तयोश्चाकर्षन्ति ।)

**लवः**—(सकौतुकोपरोधविनयम् ।) आर्याः पश्यत । एभिर्नीतोऽस्मि । (इति त्वरितं परिक्रामति ।)

**अरुन्धतीजनकौ**—[2]महत्कौतुकं वत्सस्य ।

**कौसल्या**—*अरण्णगब्भरूवालावेहिं तुम्हे तोसिदा अम्हे अ । भअवदि, जाणामि तं पेक्खंती वंचिदा विअ । ता इदो अण्णदो भविअ पेक्खम्ह दाव पलाअंतं दीहाउं ।

**अरुन्धती**—अतिजवेन दूरमतिक्रान्तः स चपलः कथं दृश्यते ! ।

**कञ्चुकी**—(प्रविश्य ।) भगवान्वाल्मीकिराह ज्ञातव्यमेतदवसरे भवद्भिरिति ।

---

* अरण्यगर्भरूपालापैर्यूयं तोषिता वयं च । भगवति, जानामि तं प्रेक्ष्यन्ती वञ्चितेव । तस्मादितोऽन्यतो भूत्वा प्रेक्षामहे तावत्पलायमानं दीर्घायुषम् ।

---

काण्डे च । कीदृशः किंलक्षणः ॥ **पश्चादित्यादि** । सः अश्व इत्युच्यमानः विपुलं पुच्छं पश्चाद्वहति । 'वनमहिषः कोऽयमुभयतःपुच्छ' इत्यारण्यवासनानुरूपेण व्यावृत्त्यर्थं पश्चात्पदम् । अन्यथा पुच्छस्य पश्चाद्वहनाव्यभिचारात् । विपुलमित्यनेन खरव्यावृत्तिः । तस्य हि पुच्छं गोवद्रज्जूकृतं भवति । एवं च वक्ष्यमाणविशेषणानां तत्साधारणत्वेऽपि न दोषः । धूनोति चालयति । दीर्घग्रीवो भवति आयतकण्ठो भवति । तस्य खुराश्चत्वार एव नाधिका इत्यर्थः । शष्पाणि बालतृणानि । अत्ति खादति । शकृत्पिण्डकान् पुरीषपिण्डकानाम्रमात्रान् रसालशलाटुपरिमितान् प्रकिरति विक्षिपति । स पुनर्दूरं व्रजति गच्छति ॥ २६ ॥ कौतुकं हर्षः, उपरोधः बलात्क्रियमाणत्वम् । अरण्यगर्भाणां अरण्यचरशिशूनां रूपैरालापैश्च तोषिता यूयम् । अहं तं पश्यन्ती वञ्चितेति जानामि । रामभद्रसंवादेन प्रलोभिताहमिति भावः । कञ्चुकी । गृष्टिरित्यर्थः । अवसरे प्राप्तकाले । एतद्वाल्मीकिवाक्यमतिगम्भीरं गूढाशयं किमपि अपूर्वम् ॥ वृद्धानामरुन्धतीप्रभृतीनां

---

१ 'वाऽऽख्यातैः' इति पा० । २ 'पूरयतु कौतुकं वत्सः ।' इति पा० ।

जनकः—अतिगम्भीरमेतत्किमपि !। भगवत्यरुन्धति, सखि कौसल्ये, आर्ये गृष्टे, स्वयमेव गत्वा भगवन्तं प्राचेतसं पश्यामः ।

(इति निष्क्रान्तो वृद्धवर्गः ।)

(प्रविश्य ।)

बटवः—पश्यतु कुमारस्तावदाश्चर्यम् ।

लवः—दृष्टमवगतं च, नूनमाश्वमेधिकोऽयमश्वः ! ।

बटवः—कथं ज्ञायते ? ।

लवः—ननु मूर्खाः, पठितमेव हि युष्माभिरपि तत्काण्डम् । किं न पश्यथ प्रत्येकं शतसंख्याः कवचिनो दण्डिनो निषङ्गिणश्च रक्षितारः ? । तत्प्रायमेवान्यदपि दृश्यते । यदि च विप्रत्ययस्तत्पृच्छत ।

बटवः—भो भोः, किंप्रयोजनोऽयमश्वः परिवृतः पर्यटति ? ।

लवः—(सस्पृहमात्मगतम् ।) अश्वमेध इति नाम विश्वजयिनां क्षत्रियाणामूर्जस्वलः सर्वक्षत्रपरिभावी महानुत्कर्षनिकषः ।

(नेपथ्ये ।)

योऽयमश्वः पताकेयमथवा वीरघोषणा ।
सप्तलोकैकवीरस्य दशकण्ठकुलद्विषः ॥ २७ ॥

लवः—(सगर्वमिति ।) अहो संदीपनान्यक्षराणि ! ।

---

वर्गः समूहः दृष्टं चक्षुर्विषयीकृतम् । नूनमाश्वमेधिकोऽयमश्व इत्यवगतं अनुमितम् । अश्वमेधाय प्रभवत्याश्वमेधिकः ॥ तत्काण्डमश्वमेधप्रतिपादकश्रुतिभागः । बालकाण्डं वा तत्रापि ह्यश्वमेधः प्रसक्तः । 'काण्डोऽस्त्री'त्युक्तेः क्लीबत्वम् । शतं कवचिनः शतं निषङ्गिणः शरधिवन्तः शतमित्यर्थः । शतं दण्डिनः शतं रक्षितार इत्येतन्न पश्यथ किमित्यर्थः । तत्प्रायमेवान्यदपि कवचिप्रभृति सुसदृशं चान्यदपि । अनीकमित्यर्थः । विप्रत्ययो यदि संशयश्चेत् ॥ किंप्रयोजनः किंफलकः । परिवृतः । रक्षितृभिरिति शेषः । पर्यटति परिवृतः संचरति परिगतो गच्छति ॥ अनागते वस्तुनीच्छा स्पृहा । सर्वक्षत्रपरिभावी सकलराजकुलपरिभवजनकः । उत्कर्षनिकष उपादेयवैलक्षण्यज्ञापकदृषद्विशेषः । ऊर्जस्वलः बलिष्ठः । अविचाल्यनिकष इत्यर्थः ॥ योऽयमिति । योऽयमाश्वमेधिकोऽश्वः । इयम् । अश्व इत्यर्थः । विधेयप्राधान्यात्स्त्रीत्वं पताकात्वं विधेयम् । सप्तावयवेषु लोकेषु एकवीरस्य एकेषु प्रधानेषु वीरयति पराक्रमत इत्येकवीरः तस्य । सप्तलोकेत्यत्र मध्यमपदलोपवत्समासः । पात्रादित्वं वा । वीरैक इत्यापत्तिवारणाय एकेषु वीरयतीति विग्रहोऽङ्गीकृतः । दशकण्ठकुलस्य रावणवंशस्य द्विट् शासिता । तस्य राघवस्य पताका विजयध्वजः । अथवा पूर्वोक्तातिरेकेण वीरघोषणा वीर इति जगदाकर्णनानुकूलव्यापारः ॥ २७ ॥ गर्वः परोत्कर्षानादरः । संदीपनानि क्रोधजनकानि ।

---

१ 'एव बलमिदं' इति पा० । २ 'इह न प्रत्ययः तद्गत्वा पृ०' इति पा० ।

**बटवः**—किमुच्यते ? । प्राज्ञः खलु कुमारः ।

**लवः**—भो भोः, तत्किमक्षत्रिया पृथिवी यदेवमुद्धोष्यते ? ।

(नेपथ्ये ।)

रे रे, महाराजं प्रति कुतः क्षत्रियाः ? ।

**लवः**—धिग्जाल्मान् ! ।

यदि नो[1] सन्ति सन्त्येव केयमद्य विभीषिका ।
किमुक्तैरेभिरधुना तां पताकां हरामि वः ॥ २८ ॥

हे बटवः, परिवृत्य लोष्टैरभिघ्नन्तो । नयतैनमश्वम् । एष रोहितानां म[2]ध्येचरो भवतु ।

(प्रविश्य सक्रोधः ।)

**पुरुषः**—धिक्चपल, किमुक्तवानसि ! । तीक्ष्णतरा ह्या[3]युधश्रेणयः शिशोरपि दृप्तां वाचं न सहन्ते । राजपुत्रश्चन्द्रकेतुर्दुर्दान्तः, सोऽप्यपूर्वारण्यदर्शनाक्षिप्तहृदयो न यावदायाति तावत्त्वरितमनेन तरुगहनेनापसर्पत ।

**बटवः**—कुमार, कृतं कृत[4]मश्वेन । तर्जयन्ति विस्फा[5]रितशरासनाः कुमारमायुधीयश्रेणयः । दूरे चाश्रमपदमितः । तदेहि, हरिणप्लुतैः पलायामहे ।

---

'मनःप्रज्वलनं क्रोधः' इति ह्युक्तम् ॥ एवं पूर्वोक्तरीत्या उद्धोष्यत इति यावत्तत्किमक्षत्रिया पृथिवीत्यन्वयः ॥ महाराजं प्रति तदौन्मुख्येन कुतः कस्माद्धेतोः क्व वा ॥ धिग्जाल्मानसमीक्ष्यकारिणः । भवद्विषयका निन्देत्यर्थः । अक्षत्रिया इत्यनुषज्यते । क्षत्रिया न सन्तीति भवद्भिरुच्यते यदि तर्हि सन्त्येवेत्यवगन्तव्यम् । अथ क्षत्रियसत्ताधिकरणेऽस्मिन्दिवसे इयं विभीषिका भयोत्पादनं का ? । कीदृशीत्यर्थः। एभिरुक्तैरधुना किम् । न किमपीत्यर्थः । तां वः पताकां हराम्यन्यत्र प्रापयामि ॥२८॥ अभिघ्नन्तस्तर्जयन्तः । रोहितानां मृगविशेषाणाम् ॥ आयुधश्रेणयः शस्त्रपङ्क्तयस्तीक्ष्णतरा हि । त्वत्तोऽपि क्रूरा इत्यर्थः । दृप्तां दर्पयुक्तां वाचं न सहन्ते । शिक्षणाभाववन्तो न भवन्तीत्यर्थः । सोऽपि चन्द्रकेतुरिति योजना । दुर्दान्तोऽमर्षशीलः अपूर्वारण्यदर्शनेनाननुभूतविपिनावलोकनेनाक्षिप्तहृदयो व्यासक्तमनाः । तरूणां गहनेन दुर्गमसंनिवेशेनापसर्पत पलायध्वम् ॥ **कृतमश्वेनेति** । अश्वेन साध्यं किमपि नास्तीत्यर्थः । गर्हायां द्विरुक्तिः । अज्ञानादेव वयमत्र प्रवृत्ता इति भावः । विस्फारितशरासना घोषवद्धनुषः । तर्जयन्ति भयमुत्पादयन्ति । आश्रमपदं चाश्रमस्थानं च दूरे । विप्रकर्ष इत्यर्थः । हरिणानां

---

१ 'ते सन्ति' इति पा० । २ '°मध्ये वराकश्चरतु' इति पा० । ३ 'ह्यायुधीय°' इति पा० । ४ 'अनेन' इत्यधिकं क्वचित् । ५ 'विस्फुरितशस्त्राः' इति पा० ।

लवः—किं नाम विस्फुरन्ति शस्त्राणि ! । (इति धनुरारोपयन् ।)

ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्भूरि[1]घोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बि विकटोदरमस्तु चापम् ॥ २९ ॥

(इति यथोचितं परिक्रम्य निष्क्रान्ताः सर्वे ।)

चतुर्थोऽङ्कः ।

---

यानि प्लुतानि अभूस्पर्शगमनानि । तत्सदृशगमनैरित्यर्थः । पलायामहे परागता भवामः । 'अय गतौ' तस्य परेत्युपसर्गपूर्वकत्वम् 'उपसर्गस्यायतौ' (८।२।१९) इति लत्वम् ॥ विस्फुरन्ति घोषयुक्तानि । धनुरारोपयन् । ज्यामिति शेषः । **ज्याजिह्वयेत्यादि ।** ज्या मौर्वी सैव जिह्वा रसना तया वलयिता वेष्टिता । उत्कटकोटिरेवोत्तुङ्गाग्रभाग एव दंष्ट्रा यस्य तथोक्तम् । उद्भूरयोऽसंख्याता घोरा भयजनका घनाः सान्द्रा घर्घरघोषा यस्य तत्तथोक्तम् । एतच्चापम् । क्लीबत्वं विचारयितव्यम्, सामान्ये नपुंसकत्वं वा । अथवा 'भयामृतसकृद्वस्त्रचापाभरणलाञ्छन'मिति नपुंसकशेषोक्तेः क्लीबत्वम् । ग्रासे कवलने प्रसक्तं उद्युक्तं हसत् हासयुक्तमन्तकवक्त्रयन्त्रं व्याघ्रादिमारणयन्त्रसदृशकृतान्तस्य कुहरं तस्य जृम्भाविडम्बि जृम्भानुकारि विकटं विषमं उदरं मध्यं यस्य तथाविधमस्तु । यस्य चापस्य तथाभवनं प्राप्तकालमित्यर्थः । जिह्वेव ज्या ज्याजिह्वेत्युपमालंकारो व्याख्येयः । कोटिदंष्ट्रमित्यत्र तु कोट्यात्मकं यद्दंष्ट्रासदृशमिति व्याख्येयम् । विशेष्यविशेषणभावस्य च कामचारत्वान्न दोष इत्यप्याहुः ॥ २९ ॥

वाधूलवंशजनुषो भूसारनिवासराघवार्यस्य ।
उत्तररामचरित्रव्याख्यायामवसितस्तुरीयोऽङ्कः ॥

**इति श्रीवाधूलवीरराघवविरचितायां भवभूतिभावतलस्पर्शिनी-समाख्यायामुत्तररामचरितव्याख्यायां चतुर्थोऽङ्कः ॥**



---

१ 'मुद्धारि°' इति पा० ।

# उत्तररामचरितम् ।

पञ्चमोऽङ्कः ।

(नेपथ्ये ।)

भो भोः सैनिकाः, जातमवलम्बनमस्माकम् ।
नन्वेष त्वरितसुमन्त्रनुद्यमानप्रोद्वल्गत्प्रजवितवाजिना रथेन ।
उत्खातप्रचलितकोविदारकेतुः श्रुत्वा वः प्रधनमुपैति चन्द्रकेतुः ॥ १ ॥

(ततः प्रविशति सुमन्त्रसारथिना रथेन धनुष्पाणिः साद्भुतहर्षसंभ्रमश्चन्द्रकेतुः ।)

**चन्द्रकेतुः**—आर्य सुमन्त्र, पश्य पश्य ।

किरति कलितकिंचित्कोपरज्यन्मुखश्री-
रविरतगुणगुञ्जत्कोटिना कार्मुकेण ।
समरशिरसि चञ्चत्पञ्चचूडश्चमूना-
मुपरि शरतुषारं कोऽप्ययं वीरपोतः ॥ २ ॥

आश्चर्यमाश्चर्यम् ! ।

मुनिजनशिशुरेकः सर्वतः [2]संप्रकोपा-
न्नव इव रघुवंशस्या[3]प्रसिद्धिप्ररोहः ।

---

**नेपथ्य इत्यादि** । भो भोः सैनिकाः सेनासमवायिनः, जातमवलम्बनम् । आश्रयो लब्ध इत्यर्थः । **नन्विति** । सुमन्त्रनुद्यमानाः सुमन्त्रेण प्रेर्यमाणाः प्रोद्वल्गाः प्रकर्षेण चञ्चलाः प्रजविताः प्रकृष्टवेगयुक्ताः वाजिनोऽश्वा यस्मिंस्तथोक्तेन । उत्खातेषु निम्नोन्नतप्रदेशेषु प्रचलितकोविदारयुक्तध्वजवान् । प्रधनं युद्धं श्रुत्वा उपैति । ननु किल चूलिका । 'नेपथ्यान्तःस्थितैः पात्रैश्चूलिकाऽङ्कस्य सूचनम्' इत्युक्तेः ॥ १ ॥ **किरतीति** । कलितेनाहृतेन किंचित्कोपेन ईषन्मन्युना रज्यन्ती रक्तीभवन्ती मुखश्रीराननशोभा यस्य स तथोक्तः । अत्र प्रत्यर्थिनामकिंचित्करत्वात्किंचित्कोपेत्युक्तम् । चञ्चत्पञ्चचूडश्चलितशिखण्डकः कोऽप्यपूर्वोऽयं वीरपोतः वीरशिशुः अविरतं विश्रान्तिरहितं यथा तथा गुणे ज्यायां गुञ्जन्त्यौ अव्यक्तशब्दवत्यौ कोटी अग्रे यस्य तथोक्तेन कार्मुकेण । करणत्वात्तृतीया । समरशिरसि युद्धरङ्गे चमूनामुपरि शरतुषारं बाणवर्षं किरति । तुषारो हि अतिसूक्ष्मसलिलवृष्टिः । अत्र रज्यन्मुखश्रीः कार्मुकेण चञ्चत्पञ्चचूड इत्येतैः शरतुषारमित्यनेन च तडित्त्वतः शक्रचापयुक्तस्य चलिताग्रस्य मेघशिशोरस्य च साम्यं व्यज्यते ॥ २ ॥ **मुनिजनेत्यादि** । एकः असहायः संप्रकोपात्प्रकृष्टमन्युना । लवकोपस्य तद्दृष्ट्याल्पत्वेऽपि चन्द्रकेतुबुद्ध्या महत्त्वाद्दोषः । सर्वतः समन्ताद्दलितानां करिकपोलग्रन्थीनां संधीनां टंकारेण दलनध्वनिना घोरं भयजनकं ज्वलितं शराणां

---

१ 'प्रोद्वेल्लव' इति पा० । २ 'सैन्यकाये' इति पा० । ३ 'ऽप्रसिद्धः प्र०' इति पा० ।

दलितकरिकपोलग्रन्थिटंकारघोर-
ज्वलितशरसहस्रः कौतुकं मे करोति ॥ ३ ॥

**सुमन्त्रः**—आयुष्मन्,

अतिशयितसुरासुरप्रभावं
शिशुमवलोक्य तथैव तुल्यरूपम् ।
कुशिकसुतमखद्विषां प्रमाथे
धृतधनुषं रघुनन्दनं स्मरामि ॥ ४ ॥

**चन्द्रकेतुः**—मम त्वेकमुद्दिश्य भूयसामारम्भ इति हृदयमपत्रपते ।

अयं हि शिशुरेकको मदभरेण भूरिस्फुर-
त्करालकरकन्दलीजटिलशस्त्रजालैर्बलैः ।
क्वणत्कनककिङ्किणीझणझणायितस्यन्दनै-
रमन्दमददुर्दिनद्विरदडामरैरावृतः ॥ ५ ॥

**सुमन्त्रः**—वत्स, एभिः समस्तैरपि नालमस्य, किं पुनर्व्यस्तैः[1] ।

**चन्द्रकेतुः**—आर्य, त्वर्यतां त्वर्यताम् । अनेन हि महानाश्रितजन-प्रमारोऽस्माकमारब्धः । तथा हि—

आगर्जद्गिरिकुञ्जकुञ्जरघटानिस्तीर्णकर्णज्वरं[2]-
ज्यानिर्घोषममन्ददुन्दुभिरवैराध्मातमुज्जृम्भयन्[3] ।

सहस्रं यस्य तथोक्तम् । आनन्त्यवाची सहस्रशब्दः । नवः प्रत्यग्रः रघुवंशस्य अप्रसिद्धिप्ररोह इव स्थितः अपख्यात्यङ्कुरवत्स्थितः मुनिजनशिशुः । मुनिजनाः शमप्रधानास्तेष्वपि बाल इत्यर्थः । मे कौतुकं हर्षं करोत्युत्पादयति ॥ ३ ॥ **अतिशयितेति** । तथैव तुल्यरूपम् । यथा रामेण तुल्यप्रभावस्तथैव तुल्याकार इत्यर्थः । तथाविधं कुशिकसुतमखद्विषां सुबाहुप्रभृतीनाम् । अत्र स्मृतिमदलंकारः ॥ ४ ॥ अपत्रपते लज्जते । **अयं हीति** । अयमेककः शिशुः एकाकी बालः । मदभरेण वीरपानेन समुपजनितमदातिशयेन भूरि अधिकं स्फुरन्ति चलितानि करालानि क्रूराणि करकन्दलीषु करशाखाग्रेषु जटिलानि निबिडानि शस्त्रजालानि येषां तथोक्तैः । क्वणन्तीभिः शब्दवतीभिः कनककिङ्किणीभिः हेममयक्षुद्रघण्टिकाभिः झणझणायितैः शब्दविशेषयुक्तैरमन्दमदैरतिशयितदानवारिभिर्दुर्दिनैरन्धकारितैर्द्विरदैर्गजैः कारणैः डामरैः भयंकरैर्बलैः सैन्यैरावृतः ॥ ५ ॥ समस्तैः सहितैर्व्यस्तैः पृथक्स्थितैर्नालम् । न पर्याप्तिरित्यर्थः । आश्रितजनानामुपजीविजनानां प्रमारः मारणम् । **आगर्जदिति** । वीरः अयं लवः अमन्ददुन्दुभिरवैरतिशयितभेरीशब्दैराध्मातं द्विगुणीकृतम् । आगर्जतां भयवशाद्गाढगर्जनं कुर्वतां गिरिकुञ्जकुञ्जराणां पर्वतगुहावर्तिगजानां घटायै पङ्क्तये निस्तीर्णो दत्तः कर्णज्वरो येन स

१ 'किमस्य' इति पा० । २ '०ज्वरं' इति पा० । ३ 'उत्तम्भयन्' इति पा० ।

वेल्लद्भैरवरुण्डखण्डनिकरैर्वीरो विधत्ते भुवं
तृष्यत्कालकरालवक्त्रविघसव्याकीर्यमाणामिव ॥ ६ ॥

**सुमन्त्रः**—(स्वगतम् ।) कथमीदृशेन सह वत्सस्य चन्द्रकेतोर्द्वन्द्वसंप्रहारमनुजानीमः । (विचिन्त्य) अथवा इक्ष्वाकुकुलवृद्धाः खलु वयम् । प्रत्युपस्थिते रणे च का गतिः ? ।

**चन्द्रकेतुः**—(सविस्मयलज्जासंभ्रमम् ।) हन्त धिक् ! । अपावृत्तान्येव सर्वतः सैन्यानि मम ।

**सुमन्त्रः**—(रथवेगं निरूप्य ।) आयुष्मन्, एष ते वाग्विषयीभूतः स वीरः।

**चन्द्रकेतुः**—(विस्मृतिमभिनीय ।)आर्य, किंनामधेयमाख्यातमाह्वायकैः ? ।

**सुमन्त्रः**—लव इति ।

**चन्द्रकेतुः**—

भो भो लव महाबाहो किमेभिस्तव सैनिकैः ।
एषोऽहमेहि मामेव तेजस्तेजसि शाम्यतु ॥ ७ ॥

**सुमन्त्रः**—कुमार, पश्य पश्य ।

विनिवर्तित एष वीरपोतः
पृतनानिर्मथनात्त्वयोपहूतः ।
स्तनयित्नुरवादिभावलीना-
मवमर्दादिव दृप्तसिंहशावः ॥ ८ ॥

(ततः प्रविशति धीरोद्धतपराक्रमो लवः ।)

---

तथोक्तश्चासौ ज्यानिर्घोषस्तम् । उज्जृम्भयन्नुल्बणयन् सन् वेल्लद्भिर्लुठद्भिर्भैरवैर्भयंकरैः । रुण्डखण्डानां शिरःकपालानां निकरैः समूहैर्भुवम् । तृष्यतः कालस्य पिपासितस्य कालस्य मृत्योः करालवक्त्रस्य विघसैर्भुक्तशिष्टैः । 'विघसो यज्ञशेषभोजनशेषयोः' इत्यमरः । व्याकीर्यमाणामिव संस्तीर्यमाणामिव विधत्ते करोति । तृष्यदित्यनेन पिपासयान्यपरेण मृत्युना अर्धजग्धानि मुक्तानीति व्यज्यते ॥ ६ ॥ द्वन्द्वसंप्रहारं द्वन्द्वयुद्धमनुजानीमः अनुज्ञां करोमि । इक्ष्वाकुकुलवृद्धाः खल्वित्यनेन विमृश्यकारित्वमवश्यमिति व्यज्यते । अत्र प्रकाशानुक्तिश्चिन्त्या ॥ अपावृत्तानि पराङ्मुखीभूतानि ॥ आह्वायकैः आह्वानं कुर्वद्भिः ॥ **भो भो इति** । तेजः शौर्यं तेजसि शाम्यतु निर्वाणं भवतु ॥ ७ ॥ **विनिवर्तित इति** । पृतनानिर्मथनात्सेनाप्रहारात् । अपादाने पञ्चमी । उपहूत आहूतः । स्तनयित्नुरवात् मेघध्वनेः सिंहशावः सिंहशिशुरिव विनिवर्तित इत्येतत्पश्येत्यर्थः ॥ ८ ॥ **ततः प्रविशतीति** । धीरोद्धतो युद्धोद्भटः पराक्रमो

---

१ 'मुण्ड°' इति पा० । २ 'किमस्य' इति पा० ।

**लवः**—साधु राजपुत्र, साधु ! । सत्यमैक्ष्वाकः खल्वसि । तदहं परागत एवास्मि ।

(नेपथ्ये महान्कलकलः ।)

**लवः**—(सावष्टम्भं परावृत्य ।) आः कथमिदानीं भग्ना अपि पुनः प्रतिनिवृत्ता[1] पृष्ठानुसारिणः पर्यवष्टम्भयन्ति मां चमूपतयः ! । धिग्जाल्मान् ! ।

अयं शैलाघातक्षुभितवडवावक्त्रहुतभु-
क्प्रचण्डक्रोधार्चिर्निचयकवलत्वं व्रजतु मे ।
समन्तादुत्सर्पद्धनतुमुलहेलाकलकलः
पयोराशेरोघः प्रलयपवनास्फालित इव ॥ ९ ॥

(सवेगं परिक्रामति ।)

**चन्द्रकेतुः**—भो भोः कुमार,

अत्यद्भुतादपि गुणातिशयात्प्रियो मे
तस्मात्सखा त्वमसि[2] यन्मम तत्तवैव ।
तत्किं निजे परिजने कदनं करोषि
नन्वेष दर्पनिकषस्तव चन्द्रकेतुः ॥ १० ॥

**लवः**—(सहर्षसंभ्रमं परावृत्य ।) अहो, महानुभावस्य प्रसन्नकर्कशा वीरवचनप्रयुक्तिर्विकर्तनकुलकुमारस्य ! । तत्किमेभिरेनमेव तावत्संभावयामि ।

(पुनर्नेपथ्ये कलकलः ।)

**लवः**—(सक्रोधनिर्वेदम् ।) आः, कदर्थीकृतोऽहमेभिर्वीरसंवादविघ्नकारिभिः पापैः । (इति तदभिमुखं परिक्रामति ।)

**चन्द्रकेतुः**—आर्य, दृश्यतां द्रष्टव्यमेतत् ।

---

यस्येत्यर्थः । धीरोदात्तादयश्चत्वारो नायकाः प्रसिद्धाः, तेषु प्रायेण भटानामेव धीरोद्धतत्वमायाति । सर्वे भग्ना अपि पराजिता अपि पर्यवष्टम्भयन्ति समीपस्थिता भवन्ति । 'अवाच्चालम्बनाविदूर्ययोः' इति षत्वम् । **अयं शैलेत्यादि** । अयमोघः युष्माकं समूहः शैलाघातेन मन्दरसंघट्टनेन क्षुभितो विपर्यस्तः यः वडवावक्त्रहुतभुग्वाडवमुखाग्निस्तद्वत्प्रचण्डस्य तीक्ष्णस्य क्रोधार्चिर्निचयस्य कोपाग्निज्वालासमूहस्य कवलत्वं भक्ष्यत्वं व्रजतु । क इवेत्यत्राह—पयोराशेरोघः प्रवाह इवेत्यर्थः ॥९॥ **अत्यद्भुतादिति** । मम त्वं सखा तस्मान्मदीयं यद्वस्तु तत्तवैव त्वदीयमेव । तन्निजे परिजने किमर्थमेवं कदनं युद्धं करोषि । तव दर्पपरीक्षास्थानमेष चन्द्रकेतुरित्यर्थः ॥ १० ॥ प्रसादवती कर्कशा च कठिना च आपाततो हृद्या पर्यालोचने तु कठिनेत्यर्थः । वीरवचनप्रयुक्तिः वीरवादप्रयोगः । संभावयामि पुरस्करोमि ॥ कदर्थीकृतः अनुचितव्यापा-

---

१ '°वृत्य युद्धाभिसारिणः' इति पा० । २ 'असि' इति पा० ।

दर्पेण कौतुकवता मयि बद्धलक्ष्यः
पश्चाद्बलैरनुसृतोऽयमुदीर्णधन्वा ।
द्वेधा समुद्धतमरुत्तरलस्य धत्ते
मेघस्य माघवतचापधरस्य लक्ष्मीम् ॥ ११ ॥

सुमन्त्रः—कुमार एवैनं द्रष्टुमपि जानाति । वयं तु केवलं परवन्तो विस्मयेन ।

चन्द्रकेतुः—भो भो राजानः,

संख्यातीतैर्द्विरदतुरगस्यन्दनस्थैः पदाता-
वत्रैकस्मिन्कवचनिचितैर्[1]नद्धचर्मोत्तरीये ।
कालज्येष्ठैर्[2]अपरवयसि ख्यातिकामैर्भवद्भि-
र्योऽयं बद्धो युधि स[3]मभरस्तेन धिग्वो धिगस्मान् ॥ १२ ॥

लवः—(सोन्माथम् ।) आः, कथमनुकम्पते नाम ! । (ससंभ्रमं विचिन्त्य ।) भवतु । कालहरणप्रतिषेधाय जृम्भकास्त्रेण तावत्सैन्यानि संस्तम्भयामि (इति ध्यानं नाटयति ।)

सुमन्त्रः—तत्किमकस्मा[4]द्दुल्लोलाः सैन्यघोषाः प्रशाम्यन्ति ।

लवः—पश्याम्येनमधुना प्रगल्भम् ।

सुमन्त्रः—(ससंभ्रमम् ।) वत्स, मन्ये कुमारकेणानेन जृम्भकास्त्रमामन्त्रितमिति ।

---

खान्कृतः। वीरसंवादस्य चन्द्रकेतोरुक्तिप्रत्युक्तिकायाः युद्धस्य वा ॥ **दर्पेणेति** । कौतुकवता सामर्थ्यदर्शनेच्छायुक्तेन दर्पेण बलेन मयि बद्धलक्ष्यः दत्तचक्षुर्मयि व्यवसितलक्ष्यत्ववान् । उदीर्णधन्वा उत्क्षिप्तचापः । द्वेधा मयि बले चाभिमुखोऽयं लवः द्वेधा समुद्धतस्य चलितस्य मघवत्संबन्धिचापधरस्य वर्षाकालमेघस्य लक्ष्मीं श्रियं धत्ते ॥ ११ ॥ **संख्येति** । संख्यातीतैरसंख्येयैः द्विरदतुरगस्यन्दनेषु तिष्ठन्तीति द्विरदतुरगस्यन्दनस्थास्तथाविधैः । कवचनिचितैर्वारबाणपिहितैः । अपरवयसि वार्धके ख्यातिकामैः विजयप्रशस्तिकामनावद्भिः कालज्येष्ठैर्वयोधिकैः । न तु शौर्येणेत्यर्थः । भवद्भिरेकस्मिन्नसहाये पदातौ पादचारिणि नद्धचर्मोत्तरीयेऽस्मिन् शिशौ विषये योऽयं समभरः एकौघभारः बद्धः तेन वः धिक् । युष्माकमव्यवधानेन निन्दा, अस्माकं तु युष्मद्द्वारा ॥ १२ ॥ अनुकम्पते मम दौर्बल्यमाशङ्क्य मद्दुःखं परिजिहीर्षति । कालहरणप्रतिषेधाय कालयापननिवृत्तये संस्तम्भयामि निवृत्तव्यापाराणि करोमि । प्रशाम्यन्ति विरम्यन्ति ॥ प्रगल्भं प्रौढम् ॥ आमन्त्रितमाहूतम् ॥ कः संदेहः । आमन्त्रितमित्यत्र संशयः क इत्यर्थः । मन्ये इत्यस्य संभावनावाचित्वात्तस्याश्चोत्कटैकतरकोटिसंशयरूपत्वात् ।

---

१ 'मेध्य°' इति पा० । २ 'अभिनववयःकाम्यकाये भवद्भिः' इति पा० । ३ 'परिकरः' इति पा० । ४ 'असत्सैन्यघोषः प्रशाम्यति' इति पा० ।

**चन्द्रकेतुः**—अत्र कः संदेहः ? ।

व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति ।
अथ लिखितमिवैतत्सैन्यमस्पन्दमास्ते
नियतमजितवीर्यं जृम्भते जृम्भकास्त्रम् ॥ १३ ॥

आश्चर्यमाश्चर्यम् ! ।

पातालोदरकुञ्जपुञ्जिततमःश्यामैर्नभो जृम्भकै-
रुत्तप्तस्फुरदारकूटकपिलज्योतिर्ज्वलद्दीप्तिभिः ।
कल्पाक्षेपकठोरभैरवमरुद्व्यस्तै[1]रभिस्तीर्यते
लीनाम्भोदतडित्कडारकुहरैर्विन्ध्याद्रिकूटैरिव ॥ १४ ॥

**सुमन्त्रः**—कुतः पुनरस्य जृम्भकाणामागमः स्यात् ? ।

**चन्द्रकेतुः**—भगवतः प्राचेतसादिति मन्यामहे ।

**सुमन्त्रः**—वत्स, नैतदेवमस्त्रेषु विशेषतो जृम्भकेषु । यतः—

भृ[2]शाश्वतनया ह्येते भृ[2]शाश्वात्कौशिकं गताः ।
अथ तत्संप्रदायेन रामभद्रे स्थिता इ[3]ति ॥ १५ ॥

**चन्द्रकेतुः**—अपरेऽपि प्रचीयमानसत्त्वप्रकाशाः स्वयं सर्वँ मन्त्रदृशः पश्यन्ति ।

---

**व्यतिकर इति**। तमःसंबन्धी तामसः विद्युत्संबन्धी वैद्युतश्च । तथाविधो व्यतिकरः संपर्कः । प्रणिहितमपि प्रयत्नेन निक्षिप्तमपि ग्रस्तं च तन्मुक्तं च । खञ्जकुब्जादिवत्समासः । तमसा ग्रस्तं ज्योतिषा मुक्तम् । तमस्यसत्कल्पत्वाद्ग्रस्तत्वम्, ज्योतिषि च कार्यकरत्वात्ततो मुक्तत्वम् । चक्षुर्हिनस्ति बाधते । नियतं निश्चितम् ॥ १३ ॥ आश्चर्यमभूतपूर्वम् । **पातालेति**। पातालोदरमेव कुञ्जः गुहा तस्मिन्पुञ्जितानि संहतभावं प्राप्तानि यानि तमांसि तद्वत् श्यामैः उत्तप्तं स्फुरत्तेजिष्ठं च यदारकूटं त्रपुधातुविशेषस्तस्य यत्कपिलं पिशङ्गं ज्योतिस्तद्वज्ज्वलद्दीप्तिभिः । अत एव कल्पाक्षेपे कल्पावसाने कठोरेण दृढेन भैरवेण भीतिजनकेन मरुता व्यस्तैर्वियोजितैर्लीनाम्भोदानि तडित्कडाराणि च कुहराणि येषां तथोक्तैः । कडारः कपिलः । विन्ध्याचलशृङ्गैरिव स्थितैः जृम्भकैर्नभः अभिस्तीर्यते आच्छाद्यते ॥ १४ ॥ कुतः पुनः कस्मात्पुरुषात्पुनरस्य लवस्य ॥ मन्त्रेषु विषये एतदागमनमेवं त्वन्मतरीत्या न घटते । जृम्भकास्त्रेषु विषये एतत्प्राचेतसादधिगम इत्येतद्विशेषत एव तु न घटते । **भृशाश्वेति**। भृशाश्वतनया ह्येते एते अस्त्रदेवताविशेषाः भृशाश्वमुनिना आदौ जानताः । हीति प्रसिद्धौ । कौशिकं विश्वामित्रम् । अथानन्तरं तत्संप्रदायेन विश्वामित्रोपदेशेन ॥ १५ ॥ अपरे-

---

१ 'अवस्तीर्यते मीलन्मघतडित्' इति पा० । २ 'भृशाश्व०' इति उभयत्र पा० ।
३ 'अपि' इति पा० ।

**सुमन्त्रः**—वत्स, सावधानो भव ! । परागतस्ते प्रतिवीरः ! ।

**कुमारौ**—(अन्योन्यं प्रति ।) अहो, प्रियदर्शनः कुमारः ! । (सस्नेहानुरागं निर्वर्ण्य ।)

यदृच्छासंवादः किमु गुणगणानामतिशयः
पुराणो वा जन्मान्तरनिबिडबद्धः परिचयः ।
निजो वा संबन्धः किमु विधिवशात्कोऽप्यविदितो
ममैतस्मिन्दृष्टे हृदयमवधानं रचयति ॥ १६ ॥

**सुमन्त्रः**—भूयसां जीविनामेव धर्म एष यत्र स्वरसमयी कस्यचित्क्वचित्प्रीतिः, यत्र लौकिकानामुपचारस्तारामैत्रकं चक्षूराग इति । तदप्रतिसंख्येयनिबन्धनं प्रमाणमामनन्ति ।

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहात्मकस्तन्तुरन्तर्भूतानि सीव्यति ॥ १७ ॥

ऽपि भवदुक्तेभ्योऽन्येऽपि प्रचीयमानसत्त्वप्रकाशाः व्याप्नुवत्संवित्प्रकाशाः । मन्त्रदृशः स्वयमेव संप्रदायेन विनापि ॥ सावधानोऽनन्यमनाः भव ॥ कुमारौ लवचन्द्रकेतू । प्रियं सुखजनकं दर्शनं यस्य स तथोक्तः । स्नेहः मैत्री । अनुरागो भोग्यताज्ञानम् । **यदृच्छेति** । यदृच्छया दैवेन संवादः समागमः यस्य स तथोक्तः । यदृच्छया दैवेन संवाद एकरूपं यस्य तथोक्तो वा । रामादिगुणगणैरेकरूप इति हृदयम् । तथाविधो गुणगणानामतिशयः किमु । पुराणः पुरापि नवः । जन्मान्तरेष्वन्येषु जन्मसु निबिडबद्धः दृढारूढः परिचयो वासना किमु । विधिवशाद्दैवेच्छया अविदितः कोऽपि निजः संबन्धः जननसंबन्धः किमु ! । यत एवं ततो हृदयं कर्तृ अवधानं व्यापारान्तररहिततां रचयति करोति । अथवा एतस्मिन्दृष्टे सति मम हृदयं कर्म गुणातिशयादिषु त्रिषु अन्यतमावधानता अवधानं अवहितं करोतीति । द्विकर्मणि च ल्युडित्यप्याहुः ॥ १६ ॥ **भूयसामित्यादि** । यत्र यस्यां प्रीतौ । तारामैत्री मैत्री तारा कनीनिका तत्प्रेम वा ॥ चक्षूराग आदराद्वीक्षणम् । 'चक्षुःप्रीतिर्भवेद्यत्र' इत्युक्तचक्षूराग इति च लौकिकानां जनानामुपचारो व्यवहारस्तादृशी कस्यचित्पुरुषस्य क्वचित्पुरुषे स्वरसमयी अक्रूररसा अकृत्रिमा वा प्रीतिरिति यत् एषः । विधेयप्राधान्यात्पुंस्त्वम् । भूयसां महीयसां जीविनां प्राणभृतां धर्मः स्वभावः । अप्रतिसंख्येयनिबन्धनमविचारणीयमूलं तत्प्रेम प्रमाणं यथार्थानुभवविषयमामनन्ति असकृद्वदन्ति । **अहेतुरिति** । यः अहेतुर्निष्कारणकः पक्षपातः आत्मीयत्वप्रतिसंधानमूलकानुकूलज्ञानरूपस्तस्य अहेतुकपक्षपातस्य प्रतिक्रिया निवर्तनव्यापारः नास्ति न संभवति । स्नेहात्मकः प्रेममयः सः तन्तुः भूतानि

१ 'किमु किमु गुणा°' इति पा० । २ 'भूयसा जीवधर्म एष यद्रसमयी' इति पा० । ३ 'तमप्रतिसंख्येयमनिबंधनं प्रेमाणं' इति पा० ।

**कुमारौ**—(अन्योन्यमुद्दिश्य ।)

एतस्मिन्मसृणितराजपट्टकान्ते
मोक्तव्याः कथमिव सायकाः शरीरे ।
यत्प्राप्तौ मम परिरम्भणाभिलाषा-
दुन्मीलत्पुलककदम्बमङ्गमास्ते ॥ १८ ॥

किं चाक्रान्तकठोरतेजसि गतिः का नाम शस्त्रं विना
शस्त्रेणापि हि तेन किं न विषयो जायेत यस्येदृशः ।
किं वक्ष्यत्ययमेव युद्धविमुखं मामुद्यतेऽप्यायुधे
वीराणां समयो हि दारुणरसः स्नेहक्रमं बाधते ॥ १९ ॥

**सुमन्त्रः**—(लवं निर्वर्ण्य सास्रमात्मगतम् ।) हृदय, किमन्यथा परिप्लवसे ? ।

मनोरथस्य यद्बीजं तद्दैवेनादितो हृतम् ।
लतायां पूर्वलूनायां प्रसवस्योद्भवः कुतः ॥ २० ॥

**चन्द्रकेतुः**—अवतराम्यार्य सुमन्त्र, स्यन्दनात् ।

**सुमन्त्रः**—कस्य हेतोः ? ।

**चन्द्रकेतुः**—एकस्तावदयं[1] वीरपुरुषः पूजितो भवति । अपि च

---

प्राणिनः अन्तः सीव्यति अन्तःस्यूतानि करोति ॥ १७ ॥ **एतस्मिन्निति** । राजपट्टं नीलरक्तपट्टवस्त्रं तद्वत्कान्ते कमनीय एतस्मिन् लवे चन्द्रकेतौ वा । परिरम्भणाभिलाषादालिङ्गनेच्छया । उन्मीलत्पुलककदम्बं उद्यद्रोमाञ्चनिकुरम्बम् ॥ १८ ॥ **किं चेति** । किं च पूर्वोक्तादन्यत् । आक्रान्तकठोरतेजसि आक्रान्तं प्राप्तं कठोरं पूर्णं तेजः पराभिभवनसामर्थ्यं यस्य तस्मिन्विषये शस्त्रं विना का गतिः शस्त्रसाधनकयुद्धादृते किं कर्तव्यम् ? । न किमपीत्यर्थः । तर्हि शरीरसौभाग्यानुरोधेन शस्त्रन्यासः क्रियतामित्यत्राह—**शस्त्रेणेति** । यस्य शस्त्रस्य ईदृशः महावीरः न जायेत तेन शस्त्रेणापि किम् ? । न किमपीत्यर्थः । तर्हि सौकुमार्यवीर्ययोः प्राबल्यदौर्बल्यविचारेण सौकुमार्यानुसारेण शस्त्रन्यासः क्रियतामित्यत्राह—उद्यतेऽप्यायुधे युद्धविमुखं मामयमेव किं वक्ष्यति ?, यत एवं ततः दारुणरसः क्रौर्यैकवेषः शूराणां समयः आचारः स्नेहक्रमं स्नेहव्यापारपरिपाटीं बाधते निवर्तयति ॥ १९ ॥ अन्यथा संभाव्यविषयानुसारेण परिप्लवसे चञ्चलीभवसि । रामसादृश्यात्तदपत्यं लव इति किं शङ्कसे इति भावः । **मनोरथस्येति** । मनोरथस्य अभिलष्यमाणलवनिष्ठरामापत्यत्वस्य यद्बीजं सीतारूपं तदादितो हृतं गर्भिणीदशायामेव नष्टम् । 'लूनपूर्वायाम्' इति पाठे पूर्वं लूना छिन्ना तथाविधायाम् । भूतपूर्वनिर्देशात् लूनशब्दस्य पूर्वनिपातः । 'पूर्वलूनायाम्' इति पाठे तु पूर्वस्मिन् काले लूनेत्यर्थः । प्रसवस्य पुष्पस्य ॥ २० ॥ वीरपुरुषः लवः पूजितस्तावद्भवति । द्वयोरवतरणप्रयोजनयोः

---

१ 'एकतः' इति पा० ।

खल्वार्य, क्षत्रधर्मः परिपालितो भवति । न रथिनः पादचारमभियुञ्जन्तीति शास्त्रविदः परिभाषन्ते ।

**सुमन्त्रः**—(स्वगतम् ।) आः, कष्टां दशामनुप्रपन्नोऽस्मि ! ।

कथं[2] हीदमनुष्ठानं मादृशः प्रतिषेधतु ।
कथं वाभ्यनुजानातु साहसैकरसां क्रियाम् ॥ २१ ॥

**चन्द्रकेतुः**—यदा तातमिश्रा अपि पितुः प्रियसखं त्वामर्थसंशयेषु पृच्छन्ति तत्किमार्यो विमृशति ? ।

**सुमन्त्रः**—आयुष्मन्, एवं यथाधर्ममभिमन्यसे ।

एष सांग्रामिको न्याय्य[3] एष धर्मः सनातनः ।
इयं हि रघुसिंहानां वीरचारित्रपद्धतिः ॥ २२ ॥

**चन्द्रकेतुः**—अप्रतिरूपं वचनमार्यस्य ! ।

इतिहासं पुराणं च धर्मप्रवचनानि च ।
भवन्त एव जानन्ति रघूणां च कुलस्थितिम् ॥ २३ ॥

**सुमन्त्रः**—(सस्नेहास्रं परिष्वज्य ।)

जातस्य ते पितुरपीन्द्रजितो निहन्तु-
र्वत्सस्य वत्स कति नाम दिनान्यमूनि ।

---

प्रथमं वीरपुरुषपूजा भवति । क्षत्रधर्मः खल्वपि परिपालितोऽनुष्ठितो भवति । पादचारं पदातिं रथिनो नाभियुञ्जन्तीति न युध्यन्तीति शास्त्रविदः क्षत्रधर्मप्रतिपादकार्थशास्त्रज्ञाः परिभाषन्ते नियच्छन्ति ॥ **कथं हीति** । इदमनुष्ठानं राजपुत्रस्य रथादवतरणं प्रतिषेधतु निषिध्यात् । निवर्तयेदित्यर्थः । साहसैकरसां साहसप्रकल्पैकवेशां क्रियां अनुष्ठानमभ्यनुजानातु अनुमन्येत् ॥ २१ ॥ तातमिश्रा अपि, मिश्रशब्दः पूज्यवाची । रामादयोऽपि अर्थसंशयेषु अनुष्ठेयाननुष्ठेयसंदेहेषु पितुः प्रियसखं दशरथप्रियसखं त्वां पृच्छन्ति जिज्ञासां बोधयन्ति ॥ यथाधर्मं क्षत्रधर्मानतिक्रमेण ॥ **एष इति** । संग्रामे भवः सांग्रामिकः एष वीरपुरुषपूजारूपः न्याय्य उचितः । एष धर्मः क्षत्रधर्मपरिपालनरूपः सनातनश्चिरंतनः । इयं पूर्वोक्तद्वयी वीरचारित्रपद्धतिः वीरव्यापारपरिपाटी ॥ २२ ॥ अप्रतिरूपं निस्तुलम् । **इतिहासमिति** । इतिहासं रामायणभारतादिकम् । पुराणं 'सर्गश्च प्रतिसर्गश्च' इत्याद्युक्तलक्षणकम् । धर्माः नित्यनैमित्तिकादयः प्रोच्यन्ते प्रकाश्यन्ते एभिरित्यर्थे 'करणाधिकरणयोश्च' (३।३।११७) इति ल्युट् । मन्वादिस्मृतयस्ता इत्यर्थः । कुलस्थितिं कुलमर्यादाम् ॥ २३ ॥ **जातस्येति** । वत्स चन्द्रकेतो, पितुर्जातस्य त्वत्पितुरस्मच्छिशोरिन्द्रजितो निहन्तुर्वत्सस्य लक्ष्मणस्य अमूनि दिनानि । एतावान् जीवितकाल इति यावत् । कति नाम कियन्ति नाम । यद्वा वत्सस्य जातस्या-

---

१ 'समनुगतः' इति पाठः । २ 'न्याय्यमनु' इति पा० । ३ 'न्यायः' इति पा० ।

तस्याप्यपत्यमनुतिष्ठति वीरधर्मं
दिष्ट्यागतं दशरथस्य कुलं प्रतिष्ठाम् ॥ २४ ॥

**चन्द्रकेतुः**—(सकष्टम् ।)

अप्रतिष्ठे कुलज्येष्ठे का प्रतिष्ठा कुलस्य नः ।
इति दुःखेन तप्यन्ते त्रयो नः पितरोऽपरे ॥ २५ ॥

**सुमन्त्रः**—अहह, हृदयमर्मदारणान्येव चन्द्रकेतोर्वचनानि ! ।

**लवः**—हन्त, मिश्रीकृतक्रमो रसो वर्तते ।

यथेन्दावानन्दं व्रजति समुपोढे कुमुदिनी
तथैवास्मिन्दृष्टिर्मम कलहकामः पुनरयम् ।
रणत्कारक्रूरक्वणितगुणगुञ्जद्गुरुधनु-
र्धृतप्रेमा बाहुर्विकचविकरालव्रणमुखः ॥ २६ ॥

**चन्द्रकेतुः**—(अवतरणं निरूपयन् ।) आर्य, अयमसावैक्ष्वाकश्चन्द्रकेतुरभिवादयते ।

**सुमन्त्रः**—अहितस्यैव पुनः पराभवाय महानादिवराहः कल्पताम् ।

मूनि दिनानि कति नामेत्यन्वयः । वत्सस्य लक्ष्मणस्य यज्जातं जन्म तत्संबन्धिदिनानि । जन्मप्रभृतिदिनानीत्यर्थः । तस्याप्यपत्यं कर्तृ वीरधर्ममनुतिष्ठति अनुष्ठितं करोति । प्रतिष्ठामागतमास्पदं प्राप्तं माहात्म्यं प्राप्तम् । 'प्रतिष्ठा स्थितिमाहात्म्ये' इति यादवः । दिष्ट्यानन्दे ॥ २४ ॥ **अप्रतिष्ठे इति** । कुलज्येष्ठे रामे अप्रतिष्ठे अनास्पदे । अनपत्ये सतीति यावत् । त्रयः पितरः लक्ष्मणभरतशत्रुघ्नाः ॥२५॥ हृदयमर्मणां हृदयमध्यप्रदेशानां दारणानि छेदकानि । दुःखजनकानीत्यर्थः । **यथेति** । कुमुदिनी कुमुद्वती सरस्योषधिर्वा इन्दौ चन्द्रे समुपोढे सति समुपागते सति यथानन्दं संतोषं व्रजति तथा मम दृष्टिरस्मिन् चन्द्रकेतौ समुपोढे सति आनन्दं व्रजति । एवकारः सादृश्यद्योतनार्थः । रणत्कारेण रणदिति शब्देन क्रूरं भयंकरं क्वणितं घण्टादिरणितं येन तथोक्तेन गुणेन ज्यया गुञ्जदव्यक्तं गुरु महद्यद्धनुस्तस्मिन्धृतः प्रेमा कृता प्रीतिर्येन तथोक्तः । विकचानि विस्तृतानि, विकरालानि अतिदृढानि व्रणानि मुखे अग्रे यस्य तथोक्तः । अयं मम बाहुः पुनः बाहुस्तु, दृष्टिवैषम्यार्थः पुनःशब्दः, कलहकामः युद्धाकाङ्क्षी । भवतीत्यर्थः । अतो रतिक्रोधस्थायिकयोः शृङ्गारवीरयोर्मेलनान्मिश्रितयोः रसयोः क्रमः परिपाटिर्वर्तत इति पूर्वेण संबन्धः । 'पुंभावं मनसा ययुः' इति न्यायेन कुमुदिनीदृष्टान्तात् शृङ्गाररसोत्पत्तिरिति द्रष्टव्यम् ॥ २६ ॥ अहितस्यैवानभिमतस्यैव पराभवायावमानायादिवराहः प्रलयार्णवमग्नभूमेरुद्धर्ता वराहरूपेणावतीर्णो भगवान्

१ 'दिष्ट्या गतं' इति पा० । २ 'रघुज्येष्ठे' इति पा० । ३ '°कृतो रसक्रमो' इति पा० । ४ '°लोल्बणरसः' इति पा० । ५ 'सावित्रश्चन्द्र°' इति पा० । ६ अत्र 'अजितं पुण्यमूर्जस्वि ककुत्स्थस्येव ते महः । श्रेयसे शाश्वतो देवो वराहः परिकल्पताम् ॥' इति श्लोकः पठ्यते ।

अपि च ।

देवस्त्वां सविता धिनोतु समरे गोत्रस्य यस्ते पति-[1]
स्त्वां मैत्रावरुणोऽभिनन्दतु गुरुर्यस्ते गुरूणामपि ।
ऐन्द्रावैष्णवमाग्निमारुतमथो सौपर्णमोजस्तु[2] ते
देयादेव च रामलक्ष्मणधनुर्ज्याघोषमन्त्रो जयम् ॥ २७ ॥

लवः—अतीव[3] नाम शोभसे रथस्थ एव ! । कृतं कृतमत्यादरेण ! ।

चन्द्रकेतुः—तर्हि महाभागोऽप्यन्यं रथमलंकरोतु ।

लवः—आर्य, प्रत्यारोपय रथोपरि राजपुत्रम् ।

सुमन्त्रः—त्वमप्यनुरुध्यस्व वत्सस्य चन्द्रकेतोर्वचनम् ।

लवः—को विचारः स्वेषूपकरणेषु ? । किं त्वरण्यसदो वयमनभ्यस्तरथचर्याः ।

सुमन्त्रः—जानासि वत्स, दर्पसौजन्ययोर्यदाचरितम्[4] ! । यदि पुनस्त्वामीदृशमैक्ष्वाको राजा रामभद्रः पश्येत्तदायमस्य[5] स्नेहेन हृदयमभिष्यन्दयेत् ! ।

लवः—अन्यच्च चन्द्रकेतो, सुजनः स राजर्षिः श्रूयते । (सलज्जमिव ।)

यदि[6] च वयमप्येवंप्रायाः क्रतुद्विषतामरौ
क इव[7] न गुणैस्तं राजानं जनो बहु मन्यते ।

---

कल्पतां तस्मिन् समर्थो भवतु । **देव इति** । देवः सविता सूर्यः । धिनोतु प्रीणयतु । मैत्रावरुणः वसिष्ठस्त्वामभिनन्दतु । इन्द्रस्य विष्णोश्च इदं ऐन्द्रावैष्णवम् । 'देवताद्वन्द्वे च' (७।३।२१) इति आनङ् । अग्नेर्मारुतस्य चेदमाग्निमारुतम् । 'इद्वृद्धौ' (६।३।२८) इति इत् । सौपर्णं गरुडदैवत्यमोजः पराक्रमः ज्याघोष एव मन्त्रः । अयं पराभिभवं देयाद् दद्यात् । 'एतेर्लिङि' (७।४।२४) इत्येत्वम् ॥ २७ ॥ शोभसे हृद्यो भवसि । अत्यादरेण कृतम् । अवरोहणं न कार्यमिति भावः ॥ तर्हि मदवरोहणे अनिष्टे ॥ प्रत्यारोपय आरोपय । राजपुत्रं चन्द्रकेतुम् ॥ त्वमप्यनुरुध्यस्व यथा चन्द्रकेतुस्त्वद्वचनं रथादनवरोहणेनानुरोधितवान् तथा त्वमपि तद्वचनं रथारोहणेनानुसर ॥ स्वेषु स्वीयेषूपकरणेषुरथादिषु । अरण्ये सीदन्ति वसन्तीत्यरण्यसदः । 'सत्सूद्विष–' (३।२।६१) इत्यादिना क्विप् । अनभ्यस्तरथचर्याः अपरिचितरथगतयः ॥ दर्पसौजन्ययोः यदाचरितं पराक्रमसख्यमत्योरगुणोऽयमाचारस्तं जानासीत्यर्थः ॥ अयं लवः अस्य रामभद्रस्य हृदयमभिष्यन्दयेत् द्रावयेत् ॥ **यदि चेति** । वयमहं क्रतुद्विषतां यज्ञादिघातुकानामरौ शासितरि रामभद्रविषये एवंप्राया यदि प्रेमपात्रभूताश्चेत्क इव को वा तं राजानं रञ्जकं तं रामभद्रं गुणैः शीलादिभिः

---

१ 'पिता' इति पा० । २ 'ओजोऽस्तु' इति पा० । ३ 'कुमार अति हि नाम' इति पा० । ४ 'यथोचितमाचरितं' इति पा० । ५ 'तदा तस्य···अभिष्यन्देत' इति पा० । ६ 'वयमपि न खल्वेवंप्रायाः क्रतुप्रतिघातिनः' इति पा० । ७ 'इह' इति पा० ।

तदपि खलु मे स व्याहारस्तुरङ्गमरक्षिणां
विकृतिमखिलक्षत्राक्षेपप्रचण्डतयाकरोत् ॥ २८ ॥

**चन्द्रकेतुः**—किं नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्षः ! ।

**लवः**—अस्त्विहामर्षो मा भूद्वा । अन्यदेतत्पृच्छामि । दान्तं हि राजानं राघवमनुशुश्रुमः । स किल नात्मना दृप्यति नाप्यस्य प्रजा वा दृप्ता जायन्ते । तत्किं मनुष्यास्तस्य राक्षसीं वाचमुदीरयन्ति ।

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः ।
सा योनिः सर्ववैराणां सा हि लोकस्य नि[1]ष्कृतिः ॥ २९ ॥

इति ह स्म तां निन्दन्ति । अथेतरामभिष्टुवन्ति ।

कामं दुग्धे विप्रकर्षत्यलक्ष्मीं
कीर्तिं सूते दु[2]र्हृदो निष्प्रलान्ति ।
शु[3]द्धां शान्तां मातरं मङ्गलानां
धेनुं धीराः सूनृतां वाचमाहुः ॥ ३० ॥

**सुमन्त्रः**—[4]परिभूतोऽयं बत कुमारः प्राचेतसान्तेवासी । वदत्ययमभ्युपपन्नामर्षेण संस्कारेण ।

**लवः**—यत्पुनश्चन्द्रकेतो, वदसि किं नु भवतस्तातप्रतापोत्कर्षेऽप्यमर्ष इति तत्पृच्छामि किं व्यवस्थितविषयः क्षत्रधर्म इति ।

---

हेतुभिः न बहु मन्यते। सर्वोऽपि तं संभावयतीत्यर्थः । सौजन्यस्य को विरोध इत्याह—तदपि तथापि अखिलक्षत्राक्षेपः सकलराजतिरस्कारस्तेन प्रचण्डतया क्रूरतया तुरङ्गमरक्षिणामश्वमेधाश्वरक्षकाणां विकृतिं मन्युं स व्याहारश्च 'ता पताकां हरामि वः' इत्यादिकः। अथवा तुरङ्गमरक्षिणां व्याहारः 'सप्तलोकैकवीरस्य' इत्युक्तिः मे विकृतिं मन्युं अकरोत् ॥ २८ ॥ दान्तमनहंकारमनुशुश्रुमः श्रुतवानस्मि । आत्मना स्वयं न दृप्यति नाहंकरोति, प्रजा वा दृप्ता न जायन्ते । राक्षसीं वाचं दृप्तवाचम् । तदाह—**ऋषय इति** । योनिः कारणम् । निष्कृतिः परिभवहेतुः ॥२९॥ इतरां वक्ष्यमाणाम् । **काममिति** । काममभिलषितं दुग्धे प्रपूरयति । अलक्ष्मीं विप्रकर्षति दूरीकरोति । कीर्तिं गुणवत्ताप्रथां सूते जनयति । दुर्हृदः शत्रून् निष्प्रलान्ति अतिशयेन नाशयति । सूनृता वागिति शेषः । शुद्धां दोषशून्यां शान्तां कार्कश्यरहितां मङ्गलानां मातरं हेतुं धेनुं स्वरूपेण भोग्यां धीराः ध्यानशीलाः सूनृतां शुद्धामाहुरिति योज्यम् । इतीतरामभिष्टुवन्तीति पूर्वेणान्वयः ॥ ३० ॥ अभ्युपपन्नामर्षेण उत्पन्नासहनेन संस्कारेण वासनया । तातप्रतापोत्कर्षेऽप्यमर्ष इति यद्वदसि अत्रोच्यत इति शेषः । व्यवस्थितविषयः रामभद्रमात्रनियताधिकरणकः क्षत्रधर्मः क्षत्रियासाधारणपराक्रमातिशयादिः ॥ अतिप्रसङ्गादनिष्टप्रस-

---

१ 'निष्कृतिः' इति पा० । २ 'दुष्कृतं या हिनस्ति' इति पा० । ३ 'तां चाप्येतां मातरं' इति पा० । ४ 'परिपूतस्वभावोऽयं' इति पा० ।

**सुमन्त्रः**—नैव खलु जानासि देवमैक्ष्वाकं येनैवं वदसि । तद्विरमातिप्रसङ्गात् ।

सैनिकानां प्रमाथेन सत्यमोजायितं त्वया ।
जामदग्न्यस्य दमने न हि निर्बन्धमर्हसि ॥ ३१ ॥

**लवः**—(सहासम् ।) आर्य, जामदग्न्यस्य दमनः स राजेति कोऽयमुच्चैर्वादः ? ।

सिद्धं ह्येतद्वाचि वीर्यं द्विजानां
बाह्वोर्वीर्यं यत्तु तत्क्षत्रियाणाम् ।
शस्त्रग्राही ब्राह्मणो जामदग्न्य-
स्तस्मिन्दान्ते का स्तुतिस्तस्य राज्ञः ॥ ३२ ॥

**चन्द्रकेतुः**—(सोन्माथमिव ।) आर्य सुमन्त्र, कृतमुत्तरोत्तरेण ! ।

कोऽप्येष संप्रति नवः पुरुषावतारो
वीरो न यस्य भगवान्भृगुनन्दनोऽपि ।
पर्याप्तसप्तभुवनाभयदक्षिणानि
पुण्यानि तातचरितान्यपि यो न वेद ॥ ३३ ॥

**लवः**—को हि रघुपतेश्चरितं महिमानं च न जानाति ! । यदि नाम किंचिदस्ति वक्तव्यम् । अथवा शान्तम् ! ।

वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते[1]
सुन्दस्त्रीमथनेऽप्यकुण्ठयशसो लोके महान्तो हि ते ।

---

अनाद्विरम विरतो भव । 'जुगुप्साविराम—' (२।३।२८ वा.) इति पञ्चमी । **सैनिकानामिति** । प्रमाथेन प्रकृष्टाविलोडनेन ओजायितमोजस्वीभूतम् । भावे क्तः । जामदग्न्यस्य दमने परशुरामस्य जेतरि रामभद्रे विषये । निर्बन्धं रूक्षवादम् ॥ ३१ ॥ **सिद्धमिति** । द्विजानां विप्राणां वाचि वीर्यं पराभिभवनसामर्थ्यमिति यत् । क्षत्रियाणां बाह्वोर्वीर्यमिति यत् एतत्सिद्धं प्रसिद्धं किल । जामदग्न्यः शस्त्रग्राही ब्राह्मणः । तस्मिन्दान्ते तस्य राज्ञः तद्दमनकरामभद्रस्य स्तुतिः गुणाभिधानिका का । न किमपीत्यर्थः ॥ ३२ ॥ **कोऽपीति** । यस्य परशुरामश्च वीरो न । यज्ज्ञानविषयावीरत्ववान् । भृगुनन्दनः । यः पुरुषः सप्तानां भुवनानां समाहारः सप्तभुवनं तस्याभयं भयनिवारणं तदेव दक्षिणा प्रत्युपकारनिरपेक्षं स्वाभ्युदयमुद्दिश्य दानं सा पर्याप्ता पूर्णा येषु तथोक्तानि तातचरितानि पुण्यानि रामभद्रवृत्तलक्षणगुम्फकर्माणि शुभकर्माणि तथा तु न वेद न जानाति । एषः नवः पुरुषावतारः कोऽपि क्षेपेऽयं किंशब्दः । अत्र रामचरितलक्षणक्रतूनां जगदभयदानमेव दक्षिणेति वर्णनाद्रूपकालंकारः ॥ ३३ ॥ यदि नाम किंचिदस्ति वक्तव्यम् । वक्तव्यं किंचिदस्ति किमित्यर्थः । **वृद्ध इति** । अविचारणीयचरितास्ते वृद्धास्तिष्ठन्तु । वयोमात्रं तेषां

---

१ 'किं वर्ण्यते' इति पा० ।

यानि त्रीण्यकुतोमुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुनिधने तत्राप्यभिज्ञो जनः ॥ ३४ ॥

**चन्द्रकेतुः**—आः तातापवादिन्, भिन्नमर्याद, अति हि नाम प्रगल्भसे ! ।

**लवः**—अये, मय्येव भ्रुकुटीमुखः संवृत्तः ! ।

**सुमन्त्रः**—स्फुरितमनयोः क्रोधेन ! । तथा हि ।

क्रोधेनोद्धतधूतकुन्तलभरः सर्वाङ्गजो वेपथुः
किंचित्कोकनदच्छदस्य सदृशे नेत्रे स्वयं रज्यतः ।
धत्ते कान्तिमिदं च वक्रमनयोर्भङ्गेन भिन्नभ्रुवो-
श्चन्द्रस्योद्भटलाञ्छनस्य कमलस्योद्भ्रान्तभृङ्गस्य च ॥ ३५ ॥

**लवः**—कुमार कुमार, एह्येहि । विमर्दक्षमां भूमिमवतरावः ।

(इति निष्क्रान्ताः सर्वे ।)

**इति पञ्चमोऽङ्कः ।**

---

गौरवहेतुरिति भावः । सुन्दस्त्रीमथने ताटकावधेऽपि अकुण्ठयशसः अप्रतिहतकीर्तयः । कुतोमुखानि पराङ्मुखानि पदानि पादन्यासपराङ्मुखानीति वाचा वक्तुमपि जगुप्सया कुतोमुखानीत्युक्तम् । तदिदं शौर्यातिशयकार्यम् अत्रात्यन्तमासन्नो भूत्वा खरः स्थितः तदा रामभद्रश्चापकर्षणार्थं पदत्रयं निवृत्य तं जघानेति प्रसिद्धिः । इन्द्रसूनुनिधने वालिवधे यत्कौशलं नैपुण्यमन्तर्धानपूर्वकलरूपं तत्राप्यभिज्ञो जनः वर्तते । हुमिति परिहासे ॥ ३४ ॥ तातापवादिन् रामभद्रविषयदोषवादिन् । भिन्नमर्याद अतिक्रान्तसमुदाचार ॥ भ्रुकुटीमुखः क्रोधप्रयुक्तभ्रूभङ्गयुक्तवदनः ॥ अनयोर्लवचन्द्रकेत्वोः । **क्रोधेनेति** । उद्धताः धूताश्चलन्तः कुन्तलाः केशभराः यस्मिन् स तथोक्तः । कोकनदच्छदस्य रक्तारविन्दपत्रस्य रज्यतः रक्तीभवतः । भ्रुवोर्भङ्गेन भीमम् । अनयोरिदं वक्रं च । उद्भटलाञ्छनस्य प्रकटलक्ष्मणः चन्द्रस्य उद्भ्रान्तभृङ्गस्य कमलस्य च कान्तिं धत्ते । वक्रमित्येकवचनोक्तिः संतानैक्यप्रयुक्तात्यन्तसारूप्यद्योतनाय । निदर्शनालंकारः ॥ ३५ ॥ एह्यागच्छ । विमर्दक्षमां युद्धयोग्यां भूमिमवतरावः । इति निष्क्रान्ताः सर्वे ॥

वाधूलवंशजनुषो भूसारनिवासराघवार्यस्य ।
उत्तररामचरित्रव्याख्यायामवसितः पञ्चमोऽङ्कः ॥

**इति श्रीवाधूलवीरराघवविरचितायां भवभूतिभावतलस्पर्शिनीसमाख्यायामुत्तररामचरितव्याख्यायां पञ्चमोऽङ्कः ।**

---

१ 'अपराङ्मुखानि', 'अकुतोभयानि' इति पा० । २ 'चूडामण्डलबन्धनं तरलयत्याकूतजो वेपथुः' इति पा० । ३ 'कान्तिमकाण्डताण्डवितयोर्भङ्गेन वक्रं' इति पा० । ४ 'उत्कट°' इति पा० ।

# उत्तररामचरितम् ।

षष्ठोऽङ्कः ।

(ततः प्रविशति विमानेनोज्ज्वलं विद्याधरमिथुनम् ।)

**विद्याधरः**—अहो नु खल्वनयोर्विकर्तनकुलकुमारयोरकाण्डकलह-प्रचण्डयोरुद्द्योतितक्षत्रलक्ष्मीकयोरत्यद्भुतोद्भ्रान्तदेवासुराणि विक्रान्तवि-[1]लसितानि । तथाहि प्रिये, पश्य

रणत्करणझंझणत्क्वणितकिङ्किणीकं धनु-
ध्वर्वनद्गुरुगुणाटनीकृतकरालकोलाहलम् ।
वितत्य किरतोः शरानविरतं पुनः शूरयो-
र्विचित्रमभिवर्तते भुवनभीममायोधनम् ॥ १ ॥
जृम्भितं च विचित्राय मङ्गलाय द्वयोरपि ।
स्तनयित्नोरिवामन्दुदुन्दुभेर्दुन्दुमायितम् ॥ २ ॥

तत्प्रवर्ततामनयोः प्रवीरयोरनवरतमविरलमिलितविकचकनककमल-कमनीयसंहतिरमरतरुतरुणमणिमुकुलनिकरमकरन्दसुन्दरः पुष्पनिपातः ।

**विद्याधरी**—*ता किं ति पुरो आआसं दुद्दंततरलतडिच्छडाकडारं[2] अवरं विअ झत्ति संवुत्तं ।

**विद्याधरः**—तत्किं नु खल्वद्य ? ।

---

* तत्किमिति पुर आकाशं दुर्दर्शतरलतडिच्छटाकडारमपरमिव झटिति संवृत्तम् ।

---

युद्धस्य 'दूराध्वानवधम्' इति दृश्यत्वप्रतिषेधाद्विष्कम्भेण तदाह—विद्याधरमिथुन-मित्यादिना ॥ विकर्तनः सूर्यः । अकाण्डकलहेन उभयोरप्येकत्वेन वास्तवहेतुरहितवै-रेण प्रचण्डयोः क्रूरयोरुद्द्योतिता क्षत्रलक्ष्मीः ययोस्तथोक्तयोः । अत्यद्भुतेनातिविस्मयेन उद्भ्रान्ता देवासुरा यैस्तथोक्तानि विक्रान्तस्य विक्रमस्य विलसितानि । अहो विस्मयनी-यानीत्यर्थः । **रणदिति** । रणत्करणेन रणदिति शब्दहेतुव्यास्फालनेन झणझणत्कार-क्वणितयुक्तम् । ध्वनन् गुरुगुणः ज्या यया तथोक्तया अटन्या धनुष्कोट्या कृतः करालो भीषणः कोलाहलो यस्य तथोक्तं धनुर्वितत्य मण्डलीकृत्य विस्तार्य शरानविरतं किर-तोर्वर्षतोः लवचन्द्रकेत्वोः ॥ १ ॥ स्तनयित्नोरिव गर्जन्मेघस्येव । अमन्ददुन्दुभेर्दुन्दु-मायितं दुन्दुमशब्दाः जृम्भितं प्रवृत्तम् ॥ २ ॥ अनयोर्लवचन्द्रकेत्वोस्तादर्थ्येन अवि-रलमिलिता कमलकमनीयसंहतिर्येन तथोक्तः, पुष्पनिपातः पुष्पवृष्टिः ॥ तडिच्छटया विद्युज्जालेन कडारं कपिलं आकाशमन्यदिव जातमित्यर्थः । तत्किं नु खलु नु किमिति

---

१ 'विक्रान्तचरितानि' इति पा० । २ 'उण अआंडविस्फुरिदत्तंड°' इति पा० ।

त्वष्टृयन्त्रभ्रमिभ्रान्तमार्तण्डज्योतिरुज्ज्वलः ।
पुटभेदो ललाटस्थनीललोहितचक्षुषः ॥ ३ ॥

आं ज्ञातम् । जातक्षोभेण चन्द्रकेतुना प्रयुक्तमप्रतिरूपमाग्नेयमस्त्रम्, यस्यायमग्निवच्छरसंपातः । संप्रति हि—

अवदग्धबर्बरितकेतुचामरै-
रपयातमेव हि विमानमण्डलैः ।
दहति ध्वजांशुकपटावलीमिमां
नवकिंशुकद्युतिसविभ्रमः शिखी ॥ ४ ॥

आश्चर्यम् ! । प्रवृत्त एवायमुच्चण्डवज्रखण्डावस्फोटपटुरटत्स्फुलिङ्गगुरुरुत्तालतुमुललेलिहानोज्ज्वलज्ज्वालासंभारभैरवः भगवानुषर्बुधः । प्रचण्डश्चास्य सर्वतः संपातः ! । तत्प्रियामंशुकेनाच्छाद्य सुदूरमपसरामि ।

(तथा करोति ।)

---

पदद्वयमस्य च वक्ष्यमाणवाक्यद्वयेनान्वयः । त्वष्ट्रिति । त्वष्टृशाणचक्रभ्रमिभ्रान्तमार्तण्डज्योतिः किम् ? । उज्ज्वलः ललाटस्थनीललोहितचक्षुषः रुद्रललाटनेत्रस्य पुटभेदो नु उन्मीलन्नु । अथवा किंन्विलेकमेव पदम् । मार्तण्डज्योतिरुज्ज्वल इत्येकपदं पुटभेदविशेषणम् । ज्योतिरिवोज्ज्वलतीति तदर्थः ॥ ३ ॥ जातक्षोभेण प्रकृतिविपर्यासता । आग्नेयमग्निदैवत्यम् । शरसंपातः इषुधारा । अवदग्धेति । अवदग्धानि प्रायेण दग्धानि बर्बरितानि यानि दाहजबर्बरध्वनियुक्तानि केतवः क्षुद्रध्वजाश्चामराणि वालव्यजनानि येषां तथोक्तैः । अपयातम् । भावे क्तः । नवपलाशकुसुमकान्तिसदृशः शिखी अग्निः । ध्वजाः महाकेतवः तेषामंशुकानि चीरांशुकानि तान्येव पटाः । सामान्यविशेषशब्दयोः कर्मधारयः । 'उत्तरीये वस्त्रमात्रे सूक्ष्मवस्त्रेऽपि चांशुकम्' इति रत्नमाला । अंशुकपदं सूक्ष्ममात्रपरं गोबलीवर्दन्यायेन । तेषामावलीम् । ध्वजलक्षणकान्तिव्याजपुञ्जानिति वार्थः । अत्र ध्वजाश्च अंशुकपटाश्चेति विग्रहः । व्याजपर्यायः कपटशब्दः । अंशव एव ध्वजव्याजेन वर्तन्त इति लाभात्तेजिष्ठत्वं ध्वजानां लभ्यते । किं चायमाग्नेयाग्निरग्निमपि दहतीति असंबन्धेऽपि संबन्धादतिशयोक्तिरिति अपह्नवेन सह संकरः ॥४॥ वज्रखण्डस्याशनिशकलस्य अवस्फोटः स्फुटनं तद्वत्पटु तीक्ष्णं यथा तथा रटन् स्फुलिङ्गगुरुः कणबहुलः । उत्तालतुमुलं यथा तथा अतिशयितसंकुलं यथा तथा लेलिहानः भृशं कवलनपरः । लिह्धातोर्यङ्लुकि चानश् । उज्ज्वलज्ज्वालासंभारेण ज्वालातिशयेन भैरवः भयंकरः । उषर्बुधः अग्निः । अस्याग्नेः संपातः सम्यक्पतनम् । प्रचण्डः अतितीक्ष्णः ॥ विमलमुक्ताशैलवत् निर्दोषमौक्तिकपर्वतवत् शीतलेन स्निग्धेन

---

१ 'अग्निच्छटासं०' इति पा० । २ 'रवस्फुलि०' इति पा० ।

**विद्याधरी**—दिट्ठिआ* एदेण विमलमुत्तासेअसीअलसिणिद्धमसिण-मंसलेण णाहदेहप्पंसेण आणंदसंदलिदघुण्णमाणवेअणाए अद्धोदिदो एव्व अंदरिदो मे संदावो ! ।

**विद्याधरः**—अयि, किमत्र मया कृतम् ? । अथवा—

न[1] किंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ ५ ॥

**विद्याधरी**—†कहं अविरलविलोलघुलण्णमाणविज्जुल्लदाविलासमंस-लेहिं मत्तमयूरकंठसामलेहिं ओत्थरीअदि णभोंगणं जलहरेहिं ? ।

**विद्याधरः**—हन्त, कुमारलवप्रयुक्तवारुणास्त्रप्रभावः खल्वेषः । कथमविरलप्रवृत्तवारिधारासहस्रसंपातैः प्रशान्तमेव पावकास्त्रम् ! ।

**विद्याधरी**—‡पिअं मे पिअं मे ।

**विद्याधरः**—हन्त भोः, सर्वमतिमात्रं दोषाय ! । यत्प्रलयवातो[2]त्क्षोभगम्भीरगुलुगुलायमानमेघमेदुरितान्धकारनीरन्ध्रनद्धमिव एकवारविश्वग्रसनविकटविकरालकालमुखकन्दरविवर्तमानमिव युगान्तयोगनिद्रानिरुद्ध-

---

* दिष्ट्या एतेन विमलमुक्ताशैलशीतलस्निग्धमसृणमांसलेन नाथदेहस्पर्शेनानन्दसंदलितघूर्णमानवेदनाया अर्धोदित एवान्तरितो मे संतापः ! ।

† कथमविरलविलोलघूर्णमानविद्युल्लताविलासमांसलैर्मत्तमयूरकण्ठश्यामलैरवस्तीर्यते नभोङ्गणं जलधरैः ? ।

‡ प्रियं मे प्रियं मे ।

---

स्नेहयुक्तेन मसृणेन चाकचक्यवता मांसलेन स्फीतेन । सर्वत्र विशेषणसमासः । आनन्देन संदलिता वर्तिता वेदना यस्मिंस्तथोक्तः । अन्तरितस्तिरोहितः ॥ मया किमत्र कृतम् ? । न किमपीत्यर्थः । **न किंचिदपीत्यादि** । पूर्वं व्याख्यातम् ॥ ५ ॥ विलोलाः वेपमानाः । घूर्णमानाः वेष्टमानाः । अवस्तीर्यते आच्छाद्यते । 'अवतीर्यते' इति च पाठः ॥ आग्नेयास्त्रप्रतिद्वन्द्वत्वाद्वारुणास्त्रं प्रयुक्तम् । धारासंपातैर्धारासम्यक्पतनैः प्रशान्तं निर्वापितम् ॥ अतिमात्रं प्रमाणातिक्रान्तं दोषाय । कल्पत इति शेषः । प्रलयवातेन कल्पान्तमारुतेन उत्क्षोभाः अतिशयितक्षोभयुक्ताः गम्भीरा अनल्पाः गुलुगुलायमानाः गुलुगुलु इत्याकारकवर्णध्वनियुक्ता ये मेघास्तैर्मेदुरितेन सान्द्रितेन अन्धकारेण नीरन्ध्रमविरलं नद्धमिव बद्धमिव । एकेन वारेण क्षणेन विश्वस्य प्रपञ्चस्य

---

१ 'अकिञ्चि°' इति पा० । २ 'वातावलिक्षो°' इति पा० ।

सर्वद्वारनारायणोदरनिविष्टमिव भूतं विपद्यते[1] । साधु चन्द्रकेतो, साधु । स्थाने वायव्यमस्त्रमीरितम् । यतः—

विद्याकल्पेन मरुता मेघानां भूयसामपि ।
ब्रह्मणीव विवर्तानां क्वापि प्रविलयः कृतः ॥ ६ ॥

**विद्याधरी**—*णाध, को दाणिं एसो ससंभमोक्खित्तकरब्भमिदुत्तरीअंचलो दूरदो एव्व महुरसिणिद्धवअणपडिसिद्धजुद्धव्वावारो एदाणं कुमाराणं अंदरे विमाणवरं ओदरावेदि ? ।

**विद्याधरः**—(दृष्ट्वा ।) एष शम्बूकवधात्प्रतिनिवृत्तो रघुपतिः ।

शान्तं[2] महापुरुषसंगदितं निशम्य
तद्गौरवात्समुपसंहृतसंप्रहारः ।

* नाथ, क इदानीमेष ससंभ्रमोत्क्षिप्तकरभ्रमदुत्तरीयाञ्चलो दूरत एव मधुरस्निग्धवचनप्रतिषिद्धयुद्धव्यापार एतयोः कुमारयोरन्तरे विमानवरमवतारयति ! ।

ग्रसनेन कवलनेन । एकवारः इहानावृत्तिर्वा । विकटं निम्नोन्नतं विकरालं विशेषेण भीषणं कालमुखं मृत्युवक्त्रं तस्मिन्विवर्तमानमिव विकुर्वाणमिव । युगान्ते कल्पान्ते योगनिद्रया ध्यानात्मकस्वापेन निरुद्धानि सर्वाणि द्वाराणि यस्य तथोक्तं यन्नारायणोदरं समस्तवस्त्वाधारभूतलक्ष्मीनायकोदरम् । तस्मिन्निविष्टमिव भूतम् । जात्येकवचनम् । प्राणिन इत्यर्थः । विपद्यते विपदं प्राप्नोति । वायव्यं वायुदैवत्यम् । 'वाय्वृतु–' (४।२।३१) इति यत्प्रत्ययः । ईरितं प्रेरितमिति यत्तत्स्थाने युक्तम् । यतः यस्मात् । **विद्येति** । विद्याकल्पेन तत्त्वमस्यादिवाक्यविहिततत्त्वज्ञानसदृशेन मरुता वायुना कर्त्रा भूयसां बहुतराणां मेघानां ब्रह्मणि निर्विशेषसन्मात्रे कूटस्थे चैतन्ये विवर्तानामिव अधिष्ठानविषयसत्ताकव्यावहारिकघटपटादिविकल्पानामिव प्रविलयः निवृत्तिः कृतः । इदं चाद्वैतप्रक्रियया व्याख्यातम् । परमार्थतस्तु विद्याकल्पेन दर्शनसमानाकाराविच्छिन्नस्मृतिसंतानात्मकसद्विद्यादिसदृशेन मरुता ब्रह्मणि निखिलचेतनाचेतनशरीरके समस्तकल्याणगुणाकरे श्रीमति नारायणे विवर्तानामिव विशेषणीभूतचिदचिद्वारकविलक्षणविकारभूतदेहेन्द्रियादीनामिव प्रविलयः कृतः जगदुपादानस्य ब्रह्मणः कार्यत्वनियतनामरूपप्रहाणलक्षणात्यन्तिकलय एव तदपृथक्सिद्धविशेषणभूतजीवस्य मोक्षः । स च 'तमेवं विदित्वा–' इत्यादिश्रुतिभिर्भक्तिसाध्य इति । एवमुक्तिः 'ब्रह्मैव सन् ब्रह्माप्येति' इत्युक्तेः ॥ ६ ॥ प्रतिषिद्धः निवर्तितः युद्धव्यापारो येन तथोक्तः । अन्तरे मध्ये प्रतिषेधवाक्येन तयोस्तत्प्रतिघाताय मध्ये रथस्थापनेन तन्निवर्तयतीति भावः । शम्बूकवधात् शम्बूकवधं निर्वर्त्य । ल्यब्लोपे पञ्चमी । **शान्तमिति** । शान्तं कार्कश्यरहितं महापुरुषस्य रामस्य संगदितं वचनं निशम्य तद्गौरवाद्रामविषयकगरीयस्त्वबुद्ध्या समुपसं-

१ 'प्रवेपते' इति पा० । २ 'शब्दं महापुरुषसंविहितं' इति पा० ।

शान्तो लवः प्रणत एव च चन्द्रकेतुः
कल्याणमस्तु सुतसंगमनेन राज्ञः ॥ ७ ॥

तदितस्तावदेहि । (इति निष्क्रान्तौ ।)

मिश्रविष्कम्भः ।

---

(ततः प्रविशति रामो लवः प्रणतश्चन्द्रकेतुश्च ।)

रामः—(पुष्पकादवतरन् ।)

दिनकरकुलचन्द्र चन्द्रकेतो
सरभसमेहि दृढं परिष्वजस्व ।
तुहिनशकलशीतलैस्तवाङ्गैः
शममुपयातु ममापि चित्तदाहः ॥ ८ ॥

(उत्थाप्य सस्नेहास्रं परिष्वज्य ।) [1]अप्यनामयं नूतनदिव्यास्त्रायोधनस्य तव? ।

चन्द्रकेतुः—कुशलमत्यद्भुतप्रिय[2]वयस्यलाभाभ्युदयेन । तद्विज्ञापयामि मामिव विशेषेण[3] स्निग्धेन चक्षुषा पश्यत्वमुं वीरमनरालसाहसं तातः ।

रामः—(लवं निरूप्य ।) दिष्ट्या अतिगम्भीरमधुरकल्याणाकृतिरयं सवयसो वत्सस्य[4] ।

त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै ।

---

हतः निवृत्तः संप्रहारः युद्धं येन तथोक्तः लवः शान्तः निवृत्तव्यापारोऽभूत् । चन्द्रकेतुश्च प्रणत एव । यत एवं ततः सुताभ्यां लवचन्द्रकेतुभ्यां संगमनेन समागमेन राज्ञः रामस्य कल्याणमस्तु । विद्याधरेण ज्ञातत्वात्सुतेत्युक्तिः ॥ ७ ॥ **दिनकरेति** । दिनकरकुलचन्द्र, सूर्येण सह तदीयस्यास्मद्वंशस्य आह्लादक प्रसिद्धचन्द्र । सूर्यं प्रति चन्द्रत्वाभावेनास्य तं प्रत्यपि चन्द्रत्वमाधिक्ये पर्यवस्यति । अत एव ममापि चित्तदाह इत्युक्तिः संगच्छते । ममापि एवमत्यन्ततप्तस्यापि मम । अनेन सहस्रभानुतापापेक्षयापि स्वतापस्य भूयस्त्वं गम्यते । शमं निर्वाणमुपयातु प्राप्नोतु ॥८॥ नूतनदिव्यास्त्रायोधनस्य नूतनामानुषास्त्रकरणकयुद्धस्य । नूतनं दिव्यास्त्रैरायोधनं यस्येति बहुव्रीहिः । तवेति शेषः । अनामयमारोग्यम् ॥ अत्यद्भुतस्य आश्चर्यकरस्य प्रियवयस्यस्य लाभ एवाभ्युदयस्तेन । स्निग्धेन स्नेहवता चक्षुषा । अनरालसाहसमकुटिलयुद्धादिव्यापारम् । अमुं लवम् । अतिगम्भीरा अक्षोभ्या कल्याणी मङ्गलावहा आकृतिराकारो यस्य तथोक्तः । दिष्ट्या आनन्दहेतुः । **त्रातुमित्यादि** । लोकान् चतुर्दशभुवनानि त्रातुं रक्षितुं कायवान्मूर्तिमान् सन् परिणतः जातः अस्त्रवेदः अस्त्रमन्त्रभागस्तद्वत्स्थितः । ब्रह्मकोशस्य ब्रह्माण्डस्य गुप्त्यै रक्षणाय तनुं मूर्तिं श्रितः प्राप्तः क्षात्रो धर्म इव

---

१ 'अपि नाम कुशलं तव दि°' इति पा० । २ 'प्रियदर्शनस्य लवस्य' इति पा० । ३ एतदग्रे 'वा मत्तः' इति क्वचिदधिकं पठ्यते । ४ 'वयसो' इति पा० ।

दह्यमानेन मनसा दैवाद्वत्सां विहाय सः ।
लोकोत्तरेण सत्त्वेन प्रजापुण्यैश्च जीवति ॥ ७ ॥

**रामः**—सकरुणा हि गुरवो गर्भरूपेषु ।

**सीता**—(रुदती कृताञ्जलिः ।) णेदु* मं अत्तणो अंगेसु विलअं अंबा ।

**भागी०**—किं[1] ब्रवीषि । अविलीना वत्से, संवत्सरसहस्राणि भूयाः ! ।

**पृथिवी**—वत्से, अवेक्षणीयौ ते पुत्रौ ।

**सीता**—†किं एहिं [2]अणाहेहिं ? ।

**रामः**—हृदय, वज्रमसि ! ।

**भागी०**—[3]कथं वत्सौ सनाथावप्यनाथौ ? ।

**सीता**—‡कीरिसं मे अभग्गाए सणाहत्तणं ? ।

**देव्यौ**—

जगन्मङ्गलमात्मानं कथं त्वमवमन्यसे ।
आवयोरपि यत्सङ्गात्पवित्रत्वं प्रकृष्यते ॥ ८ ॥

**लक्ष्मणः**—आर्य, श्रूयताम् ।

**रामः**—लोकः शृणोतु ।

---

* नयतु मामात्मनोऽङ्गेषु विलयमम्बा ।

† किमेताभ्यामनाथाभ्याम् ? ।

‡ कीदृशं मे अभाग्यायाः सनाथत्वम् ! ।

---

'स्तोः' इति कुत्वं च । रामभद्रस्य सीताविषयकं स्नेहं पुनः प्रेम तु न जानामीति न जानाम्येव । **दह्यमानेनेति** । दह्यमानेन भस्मीक्रियमाणेन मनसा करणेन दैवाद्धेतोः वत्सां सीतां विहाय त्यक्त्वा लोकोत्तरेण सत्त्वेन धैर्येण प्रजानां पुण्यैः सुकृतैश्च जीवति प्राणं धारयति ॥७॥ गर्भाणामिव रूपं येषां तथोक्तेषु । अस्मास्विति शेषः । गर्भस्य यथा स्वरक्षणीयानर्हत्वं मन्त्ररक्षणीयत्वं तद्वद्गुरूणां वयमित्यर्थः ॥ विलयमदर्शनम् ॥ किं ब्रवीषि । किमिति क्षेपे । संवत्सरसहस्राणि । सहस्रशब्दोऽनन्तवाची । अत्यन्तसंयोगे द्वितीया । अवेक्षणीयौ कटाक्षणीयौ । तदर्थं स्थातव्यमिति भावः ॥ अभाग्यायाः पुण्यरहितायाः सनाथत्वं नाथवत्त्वम् ॥ **जगन्मङ्गलमिति** । जगन्मङ्गलं जगतां मङ्गलं यस्मादिति बहुव्रीहिः । अनेन मङ्गलदेवतेति समाख्या स्मारिता । अवमन्यसे परिभवसि । यस्य त्वदात्मनः सङ्गात्संपर्कादावयोरपि जगत्पवित्रत्वेन प्रसिद्धयोरपि पवित्रत्वं स्वसंबन्धादन्येषामपि दोषापनोदकत्वं प्रकृष्यते पूर्वापेक्षया अतिशयितं भवति । कर्मकर्तरि तङ् ॥ ८ ॥ लोकः शृणोतु । मम हि सीतायाः शुद्धता व्यक्ता ।

---

१ 'रामः-किमन्यद्ब्रवीतु ? ।' इति रामवाक्यत्वेन पठ्यते क्वचित् । २ 'अणाधम्हि, किं एदेहिं ? ।' इति पा० । ३ 'कथं त्वं सनाथाप्यनाथा ?' इति पा० ।

(नेपथ्ये कलकलः ।)

रामः—अद्भुततरं किमपि ! ।

सीता—*किंत्ति आबद्धकलकलं पज्जलिअं अंतरिक्खं ? ।

देव्यौ—ज्ञातम् ।

भृंशाश्वः कौशिको राम इति येषां गुरुक्रमः ।
प्रादुर्भवन्ति तान्येव शस्त्राणि सह जृम्भकैः ॥ ९ ॥

(नेपथ्ये ।)

देवि सीते नमस्तेऽस्तु गतिर्नः पुत्रकौ हि ते ।
आलेख्यदर्शनादेव ययोर्दाता रघूद्वहः ॥ १० ॥

सीता—†दिट्ठिआ अत्थदेवदाओ एदाओ । हा अज्जउत्त, अज्जावि दे पसादा पडिप्फुरंदि ! ।

लक्ष्मणः—उक्तमासीदार्येण सर्वथैतानि त्वत्प्रसवमुपस्थास्यन्तीति ।

देव्यौ—

नमो वः परमास्त्रेभ्यो धन्याः स्मो वः परिग्रहात् ।
काले ध्यातैरुपस्थेयं वत्सयोर्भद्रमस्तु वः ॥ ११ ॥

रामः—

क्षुभिताः कामपि दशां कुर्वन्ति मम [2]संप्रति ।
विस्मयानन्दसंदर्भजर्जराः करुणोर्मयः ॥ १२ ॥

---

* किमित्याबद्धकलकलं प्रज्वलितमन्तरिक्षम् ? ।

† दिष्ट्या अस्त्रदेवता एताः । हा आर्यपुत्र, अद्यापि ते प्रसादाः परिस्फुरन्ति ! ।

---

कौलीनवादिजन एव शृणोत्वित्यर्थः ॥ **नेपथ्ये इति** । जृम्भकास्त्राणां प्रयोगायोग्यत्वेन तदागमनसूचनार्थं नेपथ्ये इत्युक्तम् ॥ प्रज्वलितं प्रकाशवत् ॥ **भृशाश्व इति** । गुरुक्रमः आचार्यानुपूर्वी । जृम्भकैः सह शस्त्राणि वारुणादीनि प्रादुर्भवन्ति प्रकटीभवन्ति ॥९॥ **देवीति** । पुत्रकौ नो गतिः अस्माकं प्राप्यौ । आलेख्यदर्शनात् प्रथमाङ्कोक्तचित्रदर्शनात् ॥ १० ॥ **दिष्ट्येति** । एताः अस्त्रदेवताः आनन्दहेतव इत्यर्थः । अद्याप्येवं दोषवादप्रयुक्तपरित्यागकालेऽपि ते प्रसादाः त्वदनुग्रहाः परिस्फुरन्ति प्रकाशन्ते ॥ उक्तमासीत् । प्रथमाङ्क इति शेषः ॥ **नम इति** । वः परिग्रहाद्युष्मत्कर्तृकस्वीकारात् धन्याः स्मः क्षेमलाभयुक्ता भवामः काले । युद्धादिसमये ध्यातैरागन्तव्यमिति चिन्तितैः । काले युद्धादिसमये वत्सयोरुपस्थेयं संनिधातव्यं युष्माभिरिति शेषः ॥११॥ **क्षुभिता इति** । क्षुभिताः क्षोभं प्राप्ताः । विस्मयः अपूर्ववस्तुसंदर्शनजन्यान्तःकरण-

---

१ 'कृशाश्व' इति पा० । २ 'सांप्रतं' इति पा० ।

देव्यौ—मोदस्व वत्से, मोदस्व । रामभद्रतुल्यौ ते पुत्रकाविदानीं संवृत्तौ ! ।

सीता—*भअवदीओ, को एदाणं खत्तिओइदविहिं कारइस्सदि ? ।

रामः—

एषा वसिष्ठशिष्याणां रघूणां वंशनन्दिनी ।
कष्टं सीतापि सुतयोः संस्कर्तारं न विन्दति ॥ १३ ॥

गङ्गा—भद्रे, किं तवानया चिन्तया ? । एतौ हि वत्सौ स्तन्यत्यागात्परेण भगवतो वाल्मीकेरर्पयिष्यामि ।

वसिष्ठ एव ह्याचार्यो रघुवंशस्य संप्रति ।
स एव चानयोर्ब्रह्मक्षत्रकृत्यं करिष्यति ॥ १४ ॥
यथा वसिष्ठाङ्गिरसावृषिः प्राचेतसस्तथा ।
जनकानां रघूणां च वंशयोरुभयोर्गुरुः ॥ १५ ॥

रामः—सुविचिन्तितं भगवत्या ! ।

लक्ष्मणः—आर्य, सत्यं विज्ञापयामि । तैस्तैरुपायैरिमौ वत्सौ कुशलवावुत्प्रेक्षे ।

---

* भगवत्यौ, क एतयोः क्षत्रियोचितविधिं कारयिष्यति ? ।

---

विकारविशेषः । स चात्र गङ्गापतनतत्रत्यप्रसवजृम्भकप्राप्त्यादिमूलकः । आनन्दः स्वसंबन्धसंभावनार्हताप्रयुक्तप्रीतिविशेषः । ताभ्यां जर्जराः व्याकुलिताः । करुणस्य सीतावियोगजन्यदुःखातिशयस्य ऊर्मयः तरङ्गाः मम कामपि दशामनिर्वाच्यामवस्थां कुर्वन्त्युत्पादयन्ति । ऊर्मिपदेन करुणस्य समुद्रत्वं व्यज्यते ॥१२॥ मोदस्व मोदं प्राप्नुहि । इदानीं जृम्भकास्त्रलाभे । संवृत्तौ संजातौ ॥ क्षत्रियोचितं क्षत्रियजात्यनुरूपं विधिमुपनयनसंस्कारादिशास्त्रार्थं कः कारयिष्यति । **एषेति** । वसिष्ठशिष्याणां रघूणां वंशनन्दिनी संततेरानन्दहेतुः एषा सीतापि सुतयोः संस्कर्तारं उपनयनादिसंस्कारकार्यं न विन्दति न लभते । कष्टम् । दुःख्यत इत्यर्थः ॥१३॥ भद्रे मङ्गलवति । एतौ वत्सौ । द्वितीयान्तम् । स्तन्यत्यागात्परेण स्तन्यत्यागकालानन्तरकाले । अर्पयिष्यामि विद्यादिप्रदानार्थमिति शेषः । एतेन द्वितीयाङ्कविष्कम्भस्थं केनापि देवताविशेषेणेति वाक्यं व्याख्यातम् । **वसिष्ठ इति** । ब्रह्म च क्षत्रं च ब्रह्मक्षत्रे । तयोरुचितं कृत्यं ब्राह्मणत्वजात्यनुगुणत्रय्यध्यापनं क्षत्रियत्वोचितधनुर्वेदाध्यापनं च करिष्यति ॥१४॥ **यथेति।** जनकानां रघूणां च उभयवंशयोः यथा वसिष्ठाङ्गिरसौ वसिष्ठशतानन्दौ गुरू तथा प्राचेतसः ऋषिर्गुरुः । इदं गङ्गावचनम् ॥ १५ ॥ तैस्तैरुपायैः बहुभिः हेतुभिः वत्सौ

---

१ '°ष्ठगुप्तानां' इति पा० । २ श्लोकोऽयं क्वचिन्न पठ्यते ।

एतौ हि जन्मसिद्धास्त्रौ प्राप्तप्राचेतसावुभौ ।
आर्यतुल्याकृती वीरौ वयसा द्वादशाब्दकौ ॥ १६ ॥

**रामः**—वत्सावित्येवाहं परिप्लवमानहृदयः प्रमुग्धोऽस्मि ।

**पृथिवी**—एहि वत्से, पवित्रीकुरु रसातलम् ।

**रामः**—हा प्रिये, लोकान्तरं गतासि ! ।

**सीता**—*णेदु मं अत्तणो अंगेसु विलअं अंबा । ण सहिस्सं ईरिसं जीअलोअस्स परिभवं अणुभविदुं ।

**रामः**—किमुत्तरं स्यात् ! ।

**पृथिवी**—मन्नियोगतः स्तन्यत्यागं यावत्पुत्रयोरवेक्षस्व । परेण तु यथा रोचिष्यते तथा करिष्यामि ।

**भागी०**—एवं तावत् ।

(इति निष्क्रान्ते देव्यौ सीता च ।)

**रामः**—कथं[2] प्रतिपन्न एव तावत् ? । हा चारित्रदेवते, लोकान्तरे पर्यवसितासि । (इति मूर्च्छति ।)

---

* नयतु मामात्मनोऽङ्गेषु विलयमम्बा । न सहिष्यामीदृशं जीवलोकस्य परिभवमनुभवितुम् ।

---

कुशलवौ उत्प्रेक्षे वत्सकुशलवत्त्वेन अभिनेयशिशुद्वयं संभावयामि । हेतूनाह—**एतौ हीत्यादिना** । तन्त्रेणायं श्लोकचतुष्टयपरः । अभिनेयशिश्वोः कुशलवयोश्च जन्मसिद्धास्त्रत्वादिकं समानं योज्यम् । वयसा जीवनकालेन हेतुना । द्वादशाब्दकौ द्वादशसंख्याकसंवत्सरयुक्तौ । अभिनेयशिश्वोरप्यभिनयकालापेक्षया द्वादशाब्दकत्वं बोध्यम् ॥१६॥ **वत्साविति** । परिप्लवमानहृदयस्तरलहृदयः । प्रमुग्धोऽस्मि प्रमूढोऽस्मि ॥ रसातलं अधोभुवनम् । लोकान्तरं अन्यं लोकम् ॥ विलयं तिरोहितत्वम् । जीवलोकस्य परिभवं जीवलोककर्तृकतिरस्कारम् ॥ उत्तरं पृथिव्याः प्रतिवचनं किं स्यात् । उत्तरमनन्तरभावि वा ॥ मन्नियोगतः मदादेशेन स्तन्यत्यागं यावत्स्तन्यत्यागमभिव्याप्य पुत्रयोरवेक्षस्व पुत्रौ पश्येत्यर्थः । परेण तु परस्तात्तु यथा रोचिष्यते येन प्रकारेण रुचिर्भविष्यति तेतथाहं करिष्यामीत्यर्थः ॥ एवं तावदेवमेव । देव्यौ गङ्गापृथिव्यौ । निष्क्रान्ते रङ्गस्थानादिति शेषः । लोकान्तरे पर्यवसितासि । पर्यवसानं विश्रान्तिः । लोकान्तरमेव गतासीति प्रतिपन्नं निश्चितम् । स्तन्यत्यागात्परत्र रसातलगमनस्य पृथिव्याभ्यनुज्ञातत्वात्

---

१ क्वचिदेतद्वाक्यं न लभ्यते । २ 'कथं विलय एव वैदेह्याः संपन्नः ? । हा देवि, दंडकारण्यवासिप्रियसखि ! हा चारित्रदेवते ! लोकांतरं पर्यवस्थितासि ।' इति पा० ।

**लक्ष्मणः**—भगवन्वाल्मीके, परित्रायस्व परित्रायस्व । एष ते काव्यार्थः ।

(नेपथ्ये ।)

अपनीयतामातोद्यम् । भो जङ्गमस्थावराः प्राणभृतो मर्त्यामर्त्याः, पश्यतेदानीं वाल्मीकिनाभ्यनुज्ञातं पवित्रमाश्चर्यम् ।

**लक्ष्मणः**—(विलोक्य ।)

मन्थादिव क्षुभ्यति गाङ्गमम्भो
व्याप्तं च देवर्षिभिरन्तरिक्षम् ।
आश्चर्यमार्या सह देवताभ्यां
गङ्गामहीभ्यां सलिलादुपैति[1] ॥ १७ ॥

(नेपथ्ये ।)

अरुन्धति जगद्वन्द्ये गङ्गापृथ्व्यौ जुषस्व नौ ।
अर्पितेयं तवावाभ्यां सीता पुण्यव्रता वधूः ॥ १८ ॥

**लक्ष्मणः**—अहो आश्चर्यमाश्चर्यम् ! । आर्ये, पश्य पश्य । कष्टमद्यापि नोच्छ्वसित्यार्यः ! ।

(ततः प्रविशत्यरुन्धती सीता च ।)

**अरुन्धती**—

त्वरस्व वत्से वैदेहि मुञ्च शालीनशीलताम् ।
एहि जीवय मे वत्सं सौम्यस्पर्शेन पाणिना ॥ १९ ॥

---

द्वादशानां वत्सराणामतीतत्वाच्च लोकान्तरं गतासीत्येतावन्निश्चितमिति भावः ॥ एष ते काव्यार्थः । पर्याप्तं दृष्ट इति शेषः । इतः परं निवर्तितव्यमिति हृदयम् ॥ आतोद्यं नृत्तगीतसमुदायः । अपनीयतां निवर्त्यताम् । मर्त्यामर्त्या देवमनुष्यात्मकाः जङ्गमस्थावरात्मकाश्च प्राणभृतः । वृक्षादीनामपि प्राणवत्त्वात्स्थावरोक्तिरविरुद्धा । वाल्मीकिनाभ्यनुज्ञातं करुणाद्भुतरसमित्यत्राद्भुतपदेन प्रकाश्यत्वेन बोधितं पवित्रं निर्दोषमाश्चर्यं पश्यन्तु ॥ **मन्थादिवेति** । गाङ्गमम्भः मन्थादिव मथनादिव क्षुभ्यति क्षोभं प्राप्नोति । अन्तरिक्षं देवैः ऋषिभिश्च व्याप्तम् । कौतुकादिति भावः । आर्या सीता देवताभ्यां गङ्गामहीभ्यां सह सलिलादुपैति प्राप्नोति ॥ १७ ॥ **नेपथ्ये अरुन्धतीति** । नौ द्वितीयाद्विवचनम् । गङ्गापृथ्व्यौ जुषस्व जानीहि नौ जुषस्व प्रीयस्व । तव वधूः स्नुषा इयं सीता आवाभ्यां तवार्पिता ॥ १८ ॥ आर्ये । अरुन्धतीं प्रति संबोधनम् । नोच्छ्वसिति उच्छ्वासं न प्राप्नोति । **त्वरस्वेति** । शालीनशीलतामधृष्टस्वभावत्वं मुञ्च

---

१ '°दुदैति' इति पा० ।

**सीता**—(ससंभ्रमं स्पृशन्ती ।) *समस्ससदु समस्ससदु अज्जउत्तो ! ।

**रामः**—(समाश्वस्य सानन्दम् ।) भोः, किमेतत् ! । (दृष्ट्वा सहर्षाद्भुतम् ।) कथं देवी जानकी ! । (सलज्जम् ।) अये, कथमम्बारुन्धती ! । कथं सर्वे प्रहृष्यन्ते ऋष्यशृङ्गादयोऽस्मद्गुरवः ! ।

**अरुन्धती**—वत्स, एषा भागीरथी रघुकुलदेवता देवी गङ्गा सुप्रसन्ना ।

(नेपथ्ये ।)

जगत्पते रामभद्र, स्मर्यतामालेख्यदर्शने मां प्रत्यात्मवचनम् । सा त्वमम्ब स्नुषायामरुन्धतीव सीतायां शिवानुध्यानपरा भवेति । तदनृणास्मि ।

**अरुन्धती**—इयं ते श्वश्रूर्भगवती वसुंधरा ।

(नेपथ्ये ।)

उक्तमासीदायुष्मता वत्सायाः परित्यागे 'भगवति वसुंधरे, श्लाघ्यां दुहितरमवेक्षस्व जानकीम्' इति । तदधुना कृतवचनास्मि ।

**रामः**—कृतापराधोऽपि भगवति, त्वयानुकम्पयितव्यो रामः प्रणमति ।

**अरुन्धती**—भो भोः पौरजानपदाः, इयमधुना वसुंधराजाह्नवीभ्यामेवं प्रशस्यमाना मया[2] चारुन्धत्या च समर्पिता पूर्वं भगवता वैश्वानरेण

* समाश्वसितु समाश्वसित्वार्यपुत्रः ।

त्यज । सौम्यस्पर्शेन चन्द्रवच्छीतलेन पाणिना मे वत्सं जीवय सप्राणं कुरु ॥ १९ ॥ एतत्सीतास्पर्शरूपं किं किंहेतुकम् । कथं देवी जानकी । विस्मयद्योतकः कथंशब्दः । लज्जा मनःसंकोचः । स चेहारुन्धतीदर्शनात् ॥ भागीरथी भगीरथानीता रघुकुलदेवता । देवी दीप्तिशालिनी । सुप्रसन्ना अनुग्रहं कृतवती ॥ आलेख्यदर्शने चित्रदर्शने आत्मवचनं त्वद्वचनम् । अनृणास्मि निर्यातितऋणास्मि । ऋणं ह्यवश्यप्रतिविधेयमिति सादृश्यादेवमुक्तम् ॥ आयुष्मता । त्वयेति शेषः । वसुंधरायै वसुंधरां बोधयितुमुक्तमासीदिति वचनं जातम् । श्लाघ्यां दुहितरमवेक्षस्व जानकीमिदं वस्तु उक्तमासीदिति कर्मणि क्तो वा ज्ञेयः । कृतवचनास्मि । उच्यत इति वचन उक्तार्थः । कृतः अनुष्ठितः उक्तार्थो यया तथोक्तास्मि ॥ अनुकम्पयितव्य इति दयाविषयः कर्तव्य इति प्रणमति प्रकर्षेण नमस्यति ॥ पौराः पुरवासिनः । जानपदाः देशवासिनः । एवं प्रशस्यमाना 'आवयोरपि यत्सङ्गात्पवित्रत्वं प्रकृष्यते' इत्यभिष्टुता । पूर्वं रावणवधानन्तरकाले । वैश्वानरेण

१ 'भगवती भगीरथगृहदेवता गङ्गा' इति पा० । २ 'ममारुन्धत्याः' इति पा० ।

निर्णीतपुण्यचारित्रा सब्रह्मकैश्च देवैः स्तुता सावित्रकुलवधूर्देवयजनसंभवा जानकी परिगृह्यताम् । कथमिह भवन्तो मन्यन्ते ? ।

**लक्ष्मणः**—आर्य, एवमम्बयारुन्धत्या च निर्भर्त्सिताः पौरजानपदाः कृत्स्नश्च भूतग्राम आर्यां नमस्कुर्वन्ति । लोकपालाः सप्तर्षयश्च पुष्पवृष्टिभिरुपतिष्ठन्ते ।

**अरुन्धती**—जगत्पते रामभद्र,

नियोजय यथाधर्मं प्रियां त्वं धर्मचारिणीम् ।
हिरण्मय्याः प्रतिकृतेः पुण्यां प्रकृतिमध्वरे ॥ २० ॥

**सीता**—(स्वगतम् ।) *अवि जाणादि अज्जउत्तो सीदाए दुक्खं पडिमज्जिदुं ।

**रामः**—यथा भगवत्यादिशति ।

**लक्ष्मणः**—कृतार्थोऽस्मि ।

**सीता**—†पच्चुज्जीविदम्हि ।

**लक्ष्मणः**—आर्ये[1], अयं लक्ष्मणः प्रणमति ।

**सीता**—‡वच्छे[2], ईरिसो तुमं चिरं जीअ ! ।

---

* अपि जानात्यार्यपुत्रः सीताया दुःखं परिमार्ष्टुम् ।

† प्रत्युज्जीवितास्मि ।

‡ वत्स, ईदृशस्त्वं चिरं जीव ! ।

---

अग्निना । निर्णीतपुण्यचारित्रा निश्चितपातिव्रत्या । परिगृह्यतां राज्ञीत्वेन स्वीक्रियताम् । इहास्मिन्नर्थे कथं मन्यन्ते, किं वो मतमिति भावः ॥ भूतग्रामः गोबलीवर्दन्यायेन पौरजानपदातिरिक्ता ग्राह्याः । आर्यां सीतां नमस्कुर्वन्ति । लोकपालाः इन्द्रादयः । सप्तर्षय अत्र्यादयः । पुष्पवृष्टिभिः करणैरुपतिष्ठन्ते पूजयन्ति । आर्यामित्यनुषङ्गः ॥ **नियोजयेति** । प्रियां त्वद्विषयकप्रीतियुक्ताम् । धर्मचारिणीं धर्मानुष्ठानशीलाम् । अध्वरे यागे । हिरण्मय्याः प्रतिकृतेः प्रतिमायाः पुण्यां पावनीं प्रकृतिं प्रतिमां सीतां यथाधर्मं नियोजयाज्ञापय । पुण्यामित्यनेन 'यस्य भार्या विदूरस्था पतिता दूषिताथवा । अनिच्छुः प्रतिकूला वा' इत्यादिव्युदासः ॥ २० ॥ यथा भगवत्यादिशति । तथास्त्विति शेषः ॥ कृतार्थोऽस्मि सीतारामयोः समागमरूपप्रयोजनसिद्धिमानस्मि । त्यागस्य स्वद्वारकत्वादेवमुक्तम् ॥ प्रत्युज्जीवितास्मि 'यस्त्वया सह स स्वर्गः' इत्युक्तरामसमागमात्मकपुनरुज्जीवनवती कृतास्मि ॥ ईदृशः सन् चिरं जीव मम पत्युश्च समागमं परमं श्रेयो

---

१ 'एष निर्लज्जो ल°' इति पा० । २ 'वच्छसरिसो' इति पा० ।

**अरुन्धती**—भगवन्वाल्मीके, [1]उपनयेदानीं सीतागर्भसंभवौ रामभद्रस्य कुशलवौ। (इति निष्क्रान्ता।)

**रामलक्ष्मणौ**—दिष्ट्या तथैवैतत्!।

**सीता**—*कहिं ते पुत्तआ?।

(ततः प्रविशति वाल्मीकिः कुशलवौ च।)

**वाल्मीकिः**—वत्सौ, एष वां रघुपतिः पिता। एष लक्ष्मणः कनिष्ठतातः। एषा सीता जननी। एष राजर्षिर्जनको मातामहः।

**सीता**—†(सहर्षकरुणाद्भुतं विलोक्य।) कहं तादो!। कहं जादा!।

**कुशलवौ**—हा तात, हा अम्ब, हा मातामह!।

**रामलक्ष्मणौ**—(सहर्षमालिङ्ग्य।) ननु वत्सौ, [2]युवां प्राप्तौ स्थः।

**सीता**—‡एहि जाद कुस, एहि जाद लव, चिरस्स मं परिस्सजह लोअंदरादो आअदं जणणिं!।

**कुशलवौ**—(तथा कृत्वा।) धन्यौ स्वः!।

**सीता**—§भअवं, एसा हं पणमामि।

**वाल्मीकिः**—वत्से, [3]एवमेव चिरं भूयाः!।

---

* क्व तौ पुत्रकौ?।

† कथं तातः!। कथं जातौ!।

‡ एहि जात कुश, एहि जात लव, चिरस्य मां परिष्वजेथां लोकान्तरादागतां जननीम्।

§ भगवन्, एषाहं प्रणमामि।

---

मन्वानः सन् चिरं जीव॥ रामभद्रस्य उपनय रामभद्रसमीपं प्रापय। दिष्ट्या तथैवैतत्। एतत्कुशलवोत्पत्त्यादिकं तथैव पूर्वमस्मच्चिन्तितप्रकारेणैव आसीदिति शेषः॥ क्व तौ पुत्रौ?। इदं वाल्मीकिप्रवेशसूचकम्॥ मातामहः मातुः पिता। 'मातृपितृभ्यां पितरि डामहच्' कथं जातौ कुशलवौ। जातौ कथमिति चित्तविकासे॥ **हा तातेत्यादि**। सर्वत्र हाशब्दो हर्षद्योतकः। ननु वत्सौ, युवां प्राप्तौ स्थः। ननु वत्साविति संबोधनम्। चिरस्य परिष्वजेथां बहुकालमालिङ्गयतम्। न तु यत्किंचित्क्षणालिङ्गनेन तृप्तिरिति भावः। परिष्वजेथामिति लोण्मध्यमद्विवचनम्॥ लोकान्तरात् रसातलात्॥ तथा कृत्वा आलिङ्ग्य। धन्यौ स्वः प्रशस्यौ भवावः॥ एवमेव चिरं भूयाः एवमेव

---

१ 'उपनीयेतां' इति पा०। २ 'युवां' इत्यत्र 'पुण्यैः' इति पा०। ३ 'ईदृश्येव चि०' इति पा०।

(नेपथ्ये ।)

उत्खातलवणो मधुरेश्वरः प्राप्तः ।

**लक्ष्मणः**—सानुषङ्गाणि कल्याणानि ।

**रामः**—सर्वमिदमनुभवन्नपि न प्रत्येमि । यद्वा प्रकृतिरियमभ्युदयानाम् ।

**वाल्मीकिः**—रामभद्र, उच्यतां किं ते भूयः प्रियमुपहरामि ।

**रामः**—अतः परमपि प्रियमस्ति । किं त्विदं भरतवाक्यमस्तु

पाप्मभ्यश्च पुनाति वर्धयति च श्रेयांसि सेयं कथा
माङ्गल्या च मनोहरा च जगतो मातेव गङ्गेव च ।
तामेतां परिभावयन्त्वभिनयैर्विन्यस्तरूपां बुधाः
शब्दब्रह्मविदः कवेः परिणतां प्राज्ञस्य वाणीमिमाम् ॥ २१ ॥

(निष्क्रान्ताः सर्वे ।)

**इति सप्तमोऽङ्कः ।**

---

पत्यपत्याभ्यां संगतैव भूयाः ॥ नेपथ्ये । उत्खात उन्मूलितः लवणः लवणनामकासुरो येन तथोक्तः । मधुरायाः तन्नाम्न्याः नगर्या ईश्वरः स्वामी । शत्रुघ्न इत्यर्थः । अस्यापि प्रथमाङ्कारब्धप्रयोजनलाभान्निर्वहणे निवेशः ॥ कलत्रपुत्रसमागमादिश्रेयांसि सानुषङ्गाणि । अनुषज्यन्ते अनुसंबध्यन्ते यदित्यनुषङ्गं मङ्गलान्तरम् । कर्मणि घञ् । संबन्धमनुवर्तिष्यत इत्याचार्यभगवत्पतञ्जलिप्रयोगेण नपुंसकत्वम् । संपत्संपदमनुबध्नातीति मङ्गलान्तरसहितानीत्यर्थः । शत्रुवधतद्राज्यप्राप्त्योश्च श्रेयस्त्वादनुभवन्नपि साक्षात्कुर्वन्नपि न प्रत्येमि नियतमिति न विश्वसिमि । यद्वेति । न महोष इति भावः । इयमनियतमित्ययं प्रत्ययः । अभ्युदयानां श्रेयसां प्रकृतिः स्वभावः । विधेयप्राधान्यात्स्त्रीत्वम् ॥ भूयः पुत्रकलत्रसमर्पणात्परमिष्टं किमुपहरामि उपहारीकरोमि । इदमेव सर्वथा ऋषयः श्रेयो विधास्यन्तीति प्रथमाङ्के सूचितः ॥ अतः परमपि उक्तादन्यदपि । किं त्विदं भरतवाक्यमस्तु । एवं सत्यपि वक्ष्यमाणं भरतवचनमस्तु भवनार्हम् । अर्हे लोट् । **पाप्मभ्य इति** । इयं च प्रशस्तिः । सा प्रसिद्धा इयं बुद्धिस्था कथा रामायणात्मकवाक्यप्रबन्धरूपा कथा । 'कथ वाक्यप्रबन्धे' इति धातुः । सा च वाल्मीकीयचतुर्विंशतिसहस्रिका पाप्मभ्यः दुरितेभ्यः जगत्पुनाति विभाजयति । जगत इति षष्ठ्यन्तं विपरिणम्य योजनीयम् । पूङ् धातुः यद्यपि दुरितविभजनात्मकदोषनिर्हरणवाची तथापि पाप्मभ्यः पुनातीति 'सकीचकैर्मारुतपूर्णरन्ध्रैः' इतिवद्व्याख्येयम् । जगतः श्रेयांसि पुत्रमित्रादीनि वर्धयति मोक्षपर्यन्तानि उत्तरोत्तरमधिकानि करोति । अत्र 'कुटुम्बवृद्धिं धनधान्यवृद्धिं' इत्यादिश्लोकद्वयमनुसंधेयम् । मातेव गङ्गेव माङ्गल्या मनोहरा च । माता हि दुःखविस्मारिणी सुखदा च भवति । गङ्गा पापनाशनीमोक्षदा च भवति । तद्वत्

रामायणमपीति भावः। शब्दब्रह्मविदः शब्द एव ब्रह्म परिच्छिन्नत्वापरिच्छिन्नत्वाभ्यां परब्रह्मसाम्याद्रूपणम्। तद्विदन्तीति शब्दब्रह्मविदः। बुधाः सहृदयाः अभिनयाः सात्विकाङ्गिकाहार्यवाचिकभेदेन चतुर्विधाः। अभिनयैरितीत्थंभूतलक्षणे तृतीया। अभिनयविशिष्टो यो विन्यासः रचनावैशिष्ट्यं च प्रतिपादकत्वरूपं विन्यस्तं विन्यासेन निष्पन्नं यस्यास्तथोक्तम्। शरीरं चेदानुपूर्वी। प्राज्ञस्य सर्वज्ञशिरोमणेः कवेः भवभूतिकवेः इमां वाणीं परिणतामेनामुत्तररामचरितनाटकरूपभवभूतिवागात्मना यः परिणामः तद्वतीमेनां श्रीरामायणात्मककथां परिभावयन्तु परितश्चिन्तयन्तु। 'भू अवकल्कने'। अवकल्कनं चिन्तनमित्युक्तम्। इयं कथा श्रेयांसि वर्धयति एनां परिभावयन्त्वित्यन्वादेशादेनादेशः। वाल्मीकिवागेव भवभूतिवागात्मना परिणतेत्युक्तिः। उत्तररामचरितस्य गाम्भीर्यमाधुर्ये लभ्येते॥ परिभावयन्त्वित्यनेन 'बद्धा यदर्पणरसेन विमर्दपूर्वम्' इति श्लोकार्थो ध्वनितः। परिपूर्वकस्य 'भू सत्तायाम्'इति पठितस्यैवावज्ञानार्थकत्वमिति नास्य तत्प्रसक्तिः। शब्दब्रह्मविदो बुधाः अभिनयैः सह विन्यस्तरूपां प्राज्ञस्य कवेरिमां वाणीं परिणतामेनां परिभावयन्त्विति योजना। एतेन 'एनाम्' 'इमाम्' इत्यनयोर्न पौनरुक्त्यम्। अभेदसंबन्धेनान्वयवाचकयोरिव प्रकृतिविकृतिवाचकयोरपि समानविभक्तिकत्वनियमादुभयोर्द्वितीयान्तत्वम्। एवं साङ्गं नाटकं वृत्तम्॥ २१॥

यदप्यत्राखिलं किंचित्कविनानेन बध्यते।
निरङ्कुशतया तत्तु समाधेयं मनीषिभिः॥
कोशव्याकरणे नात्र लिखिते ग्रन्थगौरवात्।
भावस्य तु गभीरत्वात्स कश्चित्कथितो मया॥
भवभूतेः कवीन्द्रस्य क्व गम्भीरो गिरां भरः।
क्व मे मतिरतिस्वल्पा सहायोऽत्र हयाननः॥
अनवरतभावनाभिर्योऽर्थः क्लेशान्मया लब्धः।
तस्य प्रकाशनीयं व्याख्या विदधातु कौतुकं सुधियाम्॥

**इति श्रीवाधूलवीरराघवविरचितायां भवभूतिभावतलस्पर्शिनीसमाख्यायामुत्तररामचरितव्याख्यायां सप्तमोऽङ्कः।**

## समाप्तमिदं नाटकम्।

# परिशिष्टम्

अस्य ग्रन्थकर्तुः महावीरचरित-मालतीमाधव-उत्तररामचरितेति ग्रन्थत्रयगतानां सदृशश्लोक-पाद-पादार्धानि पिपठिषूणां सौष्ठवार्थं चेतश्चमत्काराय चात्र सङ्गृह्यन्ते—

—(१)—

रामः—

किं त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
संकटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥
(उत्तरराम० १–८)

विश्वामित्रः—

किं त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
संकटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥
(महावीर० ४–३३)

—(२)—

रामः—

ब्रह्मादयो ब्रह्महिताय तप्त्वा परस्सहस्रं शरदां तपांसि ।
एतान्यदर्शन्गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥
(उत्तरराम० १–१५)

रामः—

ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्रं शरदस्तपांसि ।
एतान्यदर्शन्गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥
(उत्तरराम० ६–१५)

विश्वामित्रः—

ब्रह्मादयो ब्रह्महिताय तप्त्वा परःसहस्रं शरदस्तपांसि ।
एतान्यदर्शन्गुरवः पुराणाः स्वान्येव तेजांसि तपोमयानि ॥
(महावीर० १–४२)

---

१ ग्रन्थत्रयगतसमानश्लोकान् संकलय्य, एतत्परिशिष्टसंयोजनेन च यैर्वयमधमर्णीकृताः तान् अस्मत्सुहृद्वर्यान् श्री० कृष्णाजी विठ्ठल सोमणशर्मणः स्मारं स्मारमभिनन्दयामः—

नारायण राम आचार्यः.

—( ३ )—

रामः—

जनकानां रघूणां च संबन्धः कस्य न प्रियः ।
यत्र दाता ग्रहीता च स्वयं कुशिकनन्दनः ॥

( उत्तरराम० १–१७ )

राजा—

जनकानां रघूणां च संबन्धः कस्य न प्रियः ।
यत्र दाता ग्रहीता च कल्याणप्रतिभूर्भवान् ॥

( महावीर० १–५७ )

—( ४ )—

लक्ष्मणः—

पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतम् ।
धृतं बाल्ये तदार्येण पुण्यमारण्यकव्रतम् ॥

( उत्तरराम० १–२२ )

जनकः—

पुत्रसंक्रान्तलक्ष्मीकैर्यद्वृद्धेक्ष्वाकुभिर्धृतम् ।
त्वया तत्क्षीरकण्ठेन प्राप्तमारण्यकव्रतम् ॥

( महावीर० ४–५१ )

—( ५ )—

रामः—

एतस्मिन्मदकलमल्लिकाक्षपक्षा
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
संदृष्टाः कुवलयिनो मया विभागाः ॥

( उत्तरराम० १–३१ )

मकरन्दः—

एतस्मिन्मदकलमल्लिकाक्षपक्ष-
व्याधूतस्फुरदुरुदण्डपुण्डरीकाः ।
बाष्पाम्भःपरिपतनोद्गमान्तराले
दृश्यन्तामविरहितश्रियो विभागाः ॥

( मालतीमाधव ९–१४ )

—( ६ )—

रामः—उत्पत्तिपरिपूतायाः किमस्याः पावनान्तरैः ।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ (उत्तरराम० १-१३)

दशरथः—निसर्गतः पवित्रस्य किमन्यत्पावनं तव ।
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥
( महावीरचरि० ४-२७ )

—( ७ )—

रामः—नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न चरणैरवताडनानि । ( उत्तरराम० १-१४ )

माधवः—नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
मूर्ध्नि स्थितिर्न मुसलैर्वत कुट्टनानि। (मालतीमाध० ९-५१)

—( ८ )—

लक्ष्मणः—संबन्धिनो वसिष्ठादीनेष तातस्तवार्चति ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥
( उत्तरराम० १-१६ )

विश्वामित्रः—अपि प्रवृत्तयज्ञोऽसौ विदेहाधिपतिः सुखी ।
गौतमश्च शतानन्दो जनकानां पुरोहितः ॥
( महावीर० १-१९ )

—( ९ )—

रामः—जीवयन्निव ससाध्वसश्रमस्वेदबिन्दुरधिकण्ठमर्प्यताम् ।
बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः ॥
( उत्तररामचरि० १-३४ )

माधवः—जीवयन्निव समूढसाध्वसस्वेदबिन्दुरधिकण्ठमर्प्यताम् ।
बाहुरैन्दवमयूखचुम्बितस्यन्दिचन्द्रमणिहारविभ्रमः ॥
( मालतीमाध० ८-३ )

—( १० )—

रामः—म्लानस्य जीवकुसुमस्य विकासनानि
संतर्पणानि सकलेन्द्रियमोहनानि ।
एतानि ते सुवचनानि सरोरुहाक्षि
कर्णामृतानि मनसश्च रसायनानि ॥ ( उत्तरराम० १-३६ )

माधवः—म्लानस्य जीवकुसुमस्य विकासनानि
संतर्पणानि सकलेन्द्रियमोहनानि ।
आनन्दनानि हृदयैकरसायनानि
दिष्ट्या मयाप्यधिगतानि वचोमृतानि ॥
( मालतीमाध० ६-८ )

—( ११ )—

रामः—जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।
यां देवयजने पुण्ये पुण्यशीलामजीजनः ॥ ( उत्तरराम० १-५१ )

रामः—जनकानां रघूणां च यत्कृत्स्नं गोत्रमङ्गलम् ।
तत्राप्यकरुणे पापे वृथा वः करुणा मयि ॥ ( उत्तरराम० ६-४२ )

—( १२ )—

आत्रेयी—मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥
( उत्तरराम० २-५ )

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥
( वाल्मीकिरामा० बालका० २-१५ )

—( १३ )—

शम्बूकः—चतुर्दश सहस्राणि चतुर्दश च राक्षसाः ।
त्रयश्च दूषणखरत्रिमूर्धानो रणे हताः ॥ ( उत्तरराम० २-१५ )

जटायुः—चतुर्दश सहस्राणि चतुर्दश च राक्षसाः ।
त्रयश्च दूषणखरत्रिमूर्धानो रणे हताः ॥ ( महावीर० ५-१३ )

—( १४ )—

रामः—न किंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥
( उत्तरराम० २-१९ )

विद्याधरः—न किंचिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥
( उत्तरराम० ६-५ )

—( १५ )—

शम्बूकः—इह समदशकुन्ताक्रान्तवानीरमुक्त-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥

अपि च ।

दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।
शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकीर्णग्रन्थिनिष्यन्दगन्धः ॥
( उत्तरराम० २-२०।२१ )

श्रमणा—इह समदशकुन्ताक्रान्तवानीरमुक्त-
प्रसवसुरभिशीतस्वच्छतोया वहन्ति ।
फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनमुखरभूरिस्रोतसो निर्झरिण्यः ॥
अपि च ।
दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।
शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविशीर्णग्रन्थिनिष्यन्दगन्धः ॥
(महावीर० ५-४०।४१)

माधवः—फलभरपरिणामश्यामजम्बूनिकुञ्ज-
स्खलनतनुतरङ्गामुत्तरेण स्रवन्तीम् ॥ (मालतीमाध० ९।२४)

सौदामिनी—दधति कुहरभाजामत्र भल्लूकयूना-
मनुरसितगुरूणि स्त्यानमम्बूकृतानि ।
शिशिरकटुकषायः स्त्यायते सल्लकीना-
मिभदलितविकर्णग्रन्थिनिष्यन्दगन्धः ॥
(मालतीमाध० ९-६)

—(१६)—

शम्बूकः—गुञ्जत्कुञ्जकुटीरकौशिकघटाघुत्कारवत्कीचक-
स्तम्बाडम्बरमूकमौकुलिकुलः क्रौञ्चाभिधोऽयं गिरिः ।
(उत्तरराम० २-२९)

माधवः—गुञ्जत्कुञ्जकुटीरकौशिकघटाघूत्कारसंवेल्लित-
क्रन्दत्फेरवचण्डधात्कृतिभृतप्राग्भारभीमैस्तटैः ॥
(मालतीमाध० ५-१९)

—(१७)—

तमसा—परिपाण्डुदुर्बलकपोलसुन्दरं
दधती विलोलकबरीकमाननम् । (उत्तरराम० ३-४)

कामन्दकी—परिपाण्डुपांसुलकपोलमाननं
दधती मनोहरतरत्वमागता । (मालतीमाध० २-४)

—(१८)—

रामः—लीलोत्खातमृणालकाण्डकवलच्छेदेषु संपादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्यत्स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥
(उत्तरराम० ३-१६)

माधवः—लीलोत्खातमृणालकाण्डकवलच्छेदेषु संपादिताः
पुष्यत्पुष्करवासितस्य पयसो गण्डूषसंक्रान्तयः ।
सेकः शीकरिणा करेण विहितः कामं विरामे पुन-
र्न स्नेहादनरालनालनलिनीपत्रातपत्रं धृतम् ॥
(मालतीमाध० ९–३४)

—( १९ )—

रामः—दलति हृदयं शोकोद्वेगाद्द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥
(उत्तरराम० ३–३१)

माधवः—दलति हृदयं गाढोद्वेगं द्विधा तु न भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्मच्छेदी न कृन्तति जीवितम् ॥
(मालतीमाध० ९–१२)

—( २० )—

रामः—हा हा देवि स्फुटति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविरलज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥
(उत्तरराम० ३–३८)

मकरन्दः—मातर्मातर्दलति हृदयं ध्वंसते देहबन्धः
शून्यं मन्ये जगदविकलज्वालमन्तर्ज्वलामि ।
सीदन्नन्धे तमसि विधुरो मज्जतीवान्तरात्मा
विष्वङ्मोहः स्थगयति कथं मन्दभाग्यः करोमि ॥
(मालतीमाध० ९–२०)

—( २१ )—

तमसावासन्त्यौ—तव वितरतु भद्रं भूयसे मङ्गलाय ।
(उत्तरराम० ३–४८)

सूत्रधारः—भद्रं भद्रं वितर भगवन्भूयसे मङ्गलाय । (मालतीमाध० १–५)

—( २२ )—

जनकः—अनियतरुदितस्मितं विराज-
त्कतिपयकोमलदन्तकुड्मलाग्रम् ।

वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमञ्जु जल्पितं ते ॥ ( उत्तरराम० ४-४ )

कामन्दकी—अनियतरुदितस्मितं विराज-
त्कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि
स्खलदसमञ्जसमुग्धजल्पितं ते ॥ (मालतीमाध० १०-२)

—( २३ )—

अरुन्धती—एष वः श्लाघ्यसंबन्धी जनकानां कुलोद्वहः ।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥
( उत्तरराम० ४-९ )

विश्वामित्रः—तेषामिदानीं दायादो वृद्धः सीरध्वजो नृपः ।
याज्ञवल्क्यो मुनिर्यस्मै ब्रह्मपारायणं जगौ ॥
( महावीरचरि० १-१४ )

—( २४ )—

कञ्चुकी—सुहृदिव प्रकटय्य सुखप्रदां
प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणः
परिशिनष्टि विधिर्मनसो रुजम् ॥ ( उत्तरराम० ४-१५ )

माधवः—सुहृदिव प्रकटय्य सुखप्रदां
प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणः
प्रविशिनष्टि विधिर्मनसो रुजम् ॥ ( मालतीमाध० ४-७ )

—( २५ )—

जनकः—चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।
मौर्व्या मेखलया नियन्त्रितमधो वासश्च माञ्जिष्ठकं
पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥
( उत्तरराम० ४-२० )

राजा—चूडाचुम्बितकङ्कपत्रमभितस्तूणीद्वयं पृष्ठतो
भस्मस्तोकपवित्रलाञ्छनमुरो धत्ते त्वचं रौरवीम् ।
मौर्व्या मेखलया नियन्त्रितमधो वासश्च माञ्जिष्ठकं
पाणौ कार्मुकमक्षसूत्रवलयं दण्डोऽपरः पैप्पलः ॥
( महावीर० १-१८ )

—( २६ )—

लवः—ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥ (उत्तरराम० ४-२९)

जनकः—ज्याजिह्वया वलयितोत्कटकोटिदंष्ट्र-
मुद्गारिघोरघनघर्घरघोषमेतत् ।
ग्रासप्रसक्तहसदन्तकवक्त्रयन्त्र-
जृम्भाविडम्बिविकटोदरमस्तु चापम् ॥ (महावीर० ३-२९)

—( २७ )—

चन्द्रकेतुः—व्यतिकर इव भीमस्तामसो वैद्युतश्च
प्रणिहितमपि चक्षुर्ग्रस्तमुक्तं हिनस्ति । (उत्तरराम० ५-१३)

मकरन्दः—व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।
( मालतीमाध० ९-५४ )

कामन्दकी—व्यतिकर इव भीमस्तामसो वैद्युतश्च
क्षणमुपहतचक्षुर्वृत्तिरुद्भूय शान्तः ।
( मालतीमाध० १०।८ )

—( २८ )—

रामः—त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै ।
सामर्थ्यानामिव समुदयः संचयो वा गुणाना-
माविर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥
( उत्तरराम० ६-९ )

जामदग्न्यः—त्रातुं लोकानिव परिणतः कायवानस्त्रवेदः
क्षात्रो धर्मः श्रित इव तनुं ब्रह्मकोशस्य गुप्त्यै ।
सामर्थ्यानामिव समुदयः संचयो वा गुणानां
प्रादुर्भूय स्थित इव जगत्पुण्यनिर्माणराशिः ॥
( महावीर० २-४१ )

—( २९ )—

रामः—व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ (उत्तरराम० ६-१२)

मकरन्दः—व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥
(मालतीमाध० १-२७)

—(३०)—

रामः—एह्येह्यायुष्मन् ।
अमृताध्मातजीमूतस्निग्धसंहननस्य ते ।
परिष्वङ्गाय वात्सल्यादयमुत्कण्ठते जनः ॥ (उत्तरराम० ६-२१)
जामदग्न्यः—अरे, किमुद्भ्रान्तोऽसि ।
अमृताध्मातजीमूतस्निग्धसंहननस्य ते ।
कुठारः कम्बुकण्ठस्य कष्टं कण्ठे पतिष्यति ॥
(महावीर० २-४६)

—(३१)

भागीरथी—को नाम पाकाभिमुखस्य जन्तु-
र्द्वाराणि दैवस्य पिधातुमीष्टे । (उत्तरराम० ७-४)
माधवः—को नाम पाकाभिमुखस्य जन्तो-
र्द्वाराणि दैवस्य पिधातुमीष्टे । (मालतीमाध० १०-१३)

# उत्तररामचरितस्थश्लोकाङ्कवृत्तानां सूची ।

अङ्गादङ्गात्सृत इव (मन्दा.) ६।२२
अतिशयितसुरासुर (पुष्पिताग्रा) ५।४
अत्यद्भुतादपि गुणा (वसन्त.) ५।१०
अथ कोऽयमिन्द्रमणि (मञ्जु.) ६।१७
अथेदं रक्षोभिः कनक (शिख.) १।२८
अद्वैतं सुखदुःखयोः (शार्दूल.) १।३९
अनियतरुदितस्मितं (पुष्पिता.) ४।४
अनिर्भिन्नो गभीरत्वात् (अनुष्टुभ्) ३।१
अनुदिवसमवर्धय (पुष्पिताग्रा.) ३।१८
अनुभावमात्रसमव (मञ्जुभा.) ६।४१
अन्तःकरणतत्त्वस्य (अनुष्टुभ्) ३।१७
अन्तर्लीनस्य दुःखाग्ने (अनुष्टुभ्) ३।९
अन्वेष्टव्यो यदसि भु (मन्दा.) २।१३
अपत्ये यत्तादृग्दुरित (शिख.) ४।३
अपरिस्फुटनिक्वाणे (अनुष्टुभ्) ३।७
अपि जनकसुताया (मालिनी) ६।२६
अपूर्वकर्मचण्डाल (अनुष्टुभ्) १।४६
अप्रतिष्ठे कुलज्येष्ठे (अनुष्टुभ्) ५।२५
अमृताध्मातजीमूत (अनुष्टुभ्) ६।२१
अयं तावद्बाष्पस्त्रुटित (शिख.) १।२९
अयं शैलाघातक्षुभित (शिख.) ५।९
अयं हि शिशुरेकको (पृथ्वी) ५।५
अयि कठोर यशः किल (द्रुत.) ३।२७
अरुन्धति जगद्वन्द्ये (अनुष्टुभ्) ७।१८
अलसललितमुग्धा (मालिनी) १।२४
अवदग्धबर्बरित (मञ्जुभाषिणी) ६।४
अवनिरमरसिन्धुः (मालिनी) ३।४८
अस्मिन्नगस्त्यप्रमुखाः (इन्द्र.) २।३
अस्मिन्नेव लतागृहे (शार्दूल.) ३।३७
अस्यैवासीन्महति शि (मन्दा.) २।२५
अहेतुः पक्षपातो य (अनुष्टुभ्) ५।१७
अहो प्रश्रययोगेऽपि (अनुष्टुभ्) ६।२३
अहो प्रासादिकं रूप (अनुष्टुभ्) ६।२०
आगर्जद्गिरिकुञ्जकुञ्जर (शार्दूल.) ५।६
आयुष्मतः किल लवस्य (वस.) ६।१६
आलिम्पन्नमृतमयै (प्रहर्षिणी) ३।३९
आविर्भूतज्योतिषां (शालिनी) ४।१८
आविवाहसमयाद्गृहे (रथो.) १।३७
आश्च्योतनं नु हरिच (वसन्त.) ३।११
आश्वास इव भक्ती (अनुष्टुभ्) ६।१०
आसीदियं दशरथस्य (वसन्त.) ४।६
इक्ष्वाकुवंशोऽभिमतः (इन्द्र.) १।४४
इङ्गुदीपादपः सोऽयं (अनुष्टुभ्) १।२१
इतिहासं पुराणं च (अनुष्टुभ्) ५।२३
इदं कविभ्यः पूर्वेभ्यो (अनुष्टुभ्) १।१
इदं विश्वं पाल्यं विधि (शिख.) ३।३०
इयं गेहे लक्ष्मीरिय (शिख.) १।३८
इह समदशकुन्ता (मालिनी) २।२०
ईदृशानां विपाकोऽपि (अनुष्टुभ्) ३।२
उत्पत्तिपरिपूतायाः (अनुष्टुभ्) १।१३
उपायानां भावादवि (शिख.) ३।४४
ऋषयो राक्षसीमाहु (अनुष्टुभ्) ५।२९
ऋषीणामुग्रतपसां (अनुष्टुभ्) १।५०
एको रसः करुण एव (वस.) ३।४७
एतत्पुनर्वनमहो (वसन्त.) २।२२
एतद्धि परिभूतानां (अनुष्टुभ्) ४।२४
एतद्वैशसवज्रघोर (शार्दूल.) ४।२५
एतस्मिन्मदकलमल्लि (प्रहर्षि.) १।३१
एतस्मिन्मसृणितराज (प्रहर्षि.) ५।१८
एतानि तानि गिरिनिर्झर (वस.) १।२५
एते त एव गिरयो (वसन्त.) २।२३
एते ते कुहरेषु गद्गद (शार्दू.) २।३०
एतौ हि जन्मसिद्धास्त्रौ (अनु.) ७।१६
एष वः श्लाघ्यसंबन्धी (अनु.) ४।९

एष साङ्ग्रामिकोऽन्याय्य (अनु.) ५।२२
एषा वसिष्ठशिष्याणां (अनु.) ७।१३
कठोरपारावतकण्ठ (वंश.) ६।२५
कण्डूलद्विपगण्डपिण्ड (शार्दूल.) २।९
कतिपयकुसुमोद्गमः (पुष्पि.) ३।२०
कथं हीदमनुष्ठानं (अनुष्टुभ्) ५।२१
कन्यां दशरथो राजा (अनुष्टुभ्) १।४
कन्यायाः किल पूजय (शार्दू.) ४।१७
करकमलवितीर्णैः (मालिनी) ३।२५
करपल्लवः स तस्याः (आर्या) ३।४१
कामं दुग्धे विप्रकर्षं (शालिनी) ५।३०
किं चाक्रान्तकठोर (शार्दूल.) ५।१९
किं त्वनुष्ठाननित्यत्वं (अनुष्टुभ्) १।८
किमपि किमपि मन्दं (मालिनी) १।२७
किरति कलितकिंचि (मालिनी) ५।२
किसलयमिव मुग्धं (मालिनी) ३।५
कुवलयदलस्निग्धश्यामः (हरि.) ४।१९
कोऽप्येष संप्रति नवः (वसन्त.) ५।३३
क्रोधेनोद्धतधूतकुन्तल (शार्दू.) ५।३५
क्लिष्टो जनः किल जनैः (वस.) १।१४
क्व तावानानन्दो निर (शिख.) ६।३३
क्षुभिताः कामपि दशां (अनु.) ७।१२
गुञ्जत्कुञ्जकुटीरकौशिक (शार्दू.) २।२९
गृहीतो यः पूर्वं परिणय (शिख.) ३।४०
घोरं लोके विततमयशो (मन्दा.) ७।६
चतुर्दश सहस्राणि (अनुष्टुभ्) २।१५
चिरं ध्यात्वा ध्यात्वा निहित (शि.) ६।३८
चिराद्वेगारम्भी प्रसृत (शिख.) २।२६
चूडाचुम्बितकङ्कपत्र (शार्दूल.) ४।२०
जगन्मङ्गलमात्मानं (अनुष्टुभ्) ७।८
जनकानां रघूणां च (अनु.) १।१७
जनकानां रघूणां च (अनु.) १।५१
जनकानां रघूणां च (अनु.) ६।४२
जातस्य ते पितुरपीन्द्र (वस.) ५।२४
जामातृयज्ञेन वयं (इन्द्रवज्रा) १।११
जीवत्सु तातपादेषु (अनुष्टुभ्) १।१९
जीवयन्निव ससाध्वस (रथो.) १।२४
जृम्भितं च विचित्राय (अनु.) ६।२
ज्याजिह्वया वलयितो (वसन्त.) ४।२९
तटस्थं नैराश्यादपि (शिख.) ३।१३
तत्कालप्रियजनविप्र (प्रहर्षिणी) १।३०
तथैव रामः सीतायाः (अनु.) ६।३२
तुरगविचयव्यग्रानुर्वी (हरिणी) १।२३
ते हि मन्ये महात्मानः (अनु.) १।४८
त्रस्तैकहायनकुरङ्ग (वसन्त.) ३।२८
त्रातुं लोकानिव परि (मन्दा.) ६।९
त्वदर्थमिव विन्यस्तः (अनु.) ६।३६
त्वया जगन्ति पुण्यानि (अनु.) १।४३
त्वया सह निवत्स्यामि (अनु.) २।१८
त्वं जीवितं त्वमसि मे (वस.) ३।२६
त्वं वह्निर्मुनयो वसिष्ठ (शार्दूल.) ४।५
त्वमेव ननु कल्याणि (अनुष्टुभ्) ३।१०
त्वरस्व वत्से वैदेहि (अनुष्टुभ्) ७।१९
त्वष्टृयन्त्रभ्रमिभ्रान्त (अनुष्टुभ्) ६।३
दत्ताभये त्वयि यमा (वसन्त.) २।११
दत्तेन्द्राभयदक्षिणैः (शार्दूल.) ६।१८
ददतु तरवः पुष्पैः (हरिणी) ३।२४
दधति कुहरभाजां (मालिनी) २।११
दर्पेण कौतुकवता (वसन्त.) ५।११
दलति हृदयं शोको (हरिणी) ३।३१
दह्यमानेन मनसा (अनुष्टुभ्) ७।७
दिनकरकुलचन्द्र (पुष्पिताग्रा) ६।८
दिष्ट्या सोऽयं महाबाहु (अनु.) १।३२
दुःखसंवेदनायैव (अनुष्टुभ्) १।४७
दृष्टिस्तृणीकृतजग (वसन्त.) ६।१९
देवस्त्वां सविता धिनोतु (शार्दू.) ५।२७
देवि सीते नमस्तेऽस्तु (अनु.) ७।१०
देव्या अपि हि वैदेह्या (अनु.) १।६
देव्या शून्यस्य जगतो (अनु.) ३।३३
न किंचिदपि कुर्वाणः (अनु.) २।१९
न किंचिदपि कुर्वाणः (अनु.) ६।५

न किल भवतां देव्याः (**हरि.**) ३।३२
न तेजस्तेजस्वी प्रसृत (**शिख.**) ६।१४
नन्वेष त्वरितसुमन्त्र (**प्रहर्षिणी**) ५।१
न प्रमाणीकृतः पाणि (**अनुष्टुभ्**) ७।५
नमो वः परमात्रेभ्यो (**अनु.**) ७।११
नवकुवलयस्निग्धै (**हरिणी**) ३।२२
नियोजय यथाधर्मं (**अनुष्टुभ्**) ७।२०
निष्कूजस्तिमिताः क्वचि (**शार्दू.**) २।१६
नीरन्ध्रबालकदली (**वसन्त.**) ३।२१
नीवारौदनमण्डमुष्ण (**शार्दूल.**) ४।१
नूनं त्वया परिभवं च (**वसन्त.**) ४।२३
नैताः प्रियतमा वाचः (**अनु.**) ३।३४
पश्चप्रसूतेरपि तस्य (**उपजाति**) ४।१६
पतनविरलैः प्रान्तो (**हरिणी**) १।२०
परां कोटिं स्नेहे परि (**शिख.**) ६।२८
परिणतकठोरपुष्कर (**आर्या**) ६।१३
परिपाण्डुदुर्बलकपोल (**मञ्जु.**) ३।४
पश्चात्पुच्छं वहति विपुलं (**मन्दा.**) ४।२६
पश्यामि च वनस्थानं (**अनुष्टुभ्**) २।१७
पातालोदरकुञ्जपुञ्ज (**शार्दूल.**) ५।१४
पाप्मभ्यश्च पुनाति वर्ध (**शार्दू.**) ७।२१
पुत्रसंक्रान्तलक्ष्मीकै (**अनुष्टुभ्**) १।२२
पुरा यत्र स्रोतः पुलिन (**शिख.**) २।२७
पूरोत्पीडे तटाकस्य (**अनुष्टुभ्**) ३।२९
पौलस्त्यस्य जटायुषा (**शार्दूल.**) ३।४३
प्रत्युक्तस्येव दयिते (**अनुष्टुभ्**) ३।४६
प्रसाद इव मूर्तस्ते (**अनुष्टुभ्**) ३।१४
प्रियप्राया वृत्तिर्विनय (**शिखरिणी**) २।२
प्रियागुणसहस्राणां (**अनुष्टुभ्**) ६।३४
प्रिया तु सीता रामस्य (**अनु.**) ६।३१
बाष्पवर्षेण नीतं वो (**अनुष्टुभ्**) ६।२९
ब्रह्मादयो ब्रह्महिताय (**उप.**) १।१५
ब्रह्मादयो ब्रह्महिता (**उपजाति**) ६।१५
भृशाश्वः कौशिको राम (**अनु.**) ७।९
भृशाश्वतनया ह्येते (**अनुष्टुभ्**) ५।१५
भो भो लव महाबाहो (**अनु.**) ५।७

भ्रमिषु कृतपुटान्त (**मालिनी**) ३।१९
मनोरथस्य यद्वीजं (**अनुष्टुभ्**) ५।२०
मन्थादिव क्षुभ्यति (**इन्द्रवज्रा**) ७।१७
महिम्नामेतस्मिन्विनय (**शिख.**) ४।२१
मा निषाद प्रतिष्ठां त्वं (**अनुष्टुभ्**) २।५
मुनिजनशिशुरेकः (**मालिनी**) ५।३
मेघमालेव यश्वाय (**अनुष्टुभ्**) २।२४
म्लानस्य जीवकुसुम (**वसन्त.**) १।३६
य एव मे जनः पूर्वं (**अनुष्टुभ्**) ४।७
यत्र द्रुमा अपि मृगा (**वसन्त**) ३।८
यत्रानन्दाश्च मोदाश्च (**अनु.**) २।१२
यत्सावित्रैर्दीपितं भू (**शालिनी**) १।४२
यथा तिरश्चीनमलात (**उप.**) ३।३५
यथा वसिष्ठाङ्गिरसौ (**अनुष्टुभ्**) ७।१५
यथेच्छाभोग्यं वो वन (**शिख.**) २।१
यथेन्दावानन्दं व्रजति (**शिख.**) ५।२६
यदस्याः पत्युर्वा रहसि (**शिख.**) ४।१४
यदा किंचित्किंचित्कृत (**शिख.**) ६।३५
यदि च वयमप्येवंप्रायाः (**हरि.**) ५।२८
यदि नो सन्ति सन्त्येव (**अनु.**) ४।२८
यदृच्छासंवादः किमु (**शिख.**) ५।१६
यं ब्रह्माणमियं देवी (**अनुष्टुभ्**) १।२
यथा पूतमन्यो निधि (**शिख.**) ४।१०
यस्यां ते दिवसास्त्वया (**शार्दूल.**) २।२८
येनोद्गच्छद्बिसकिसलय (**मन्दा.**) ३।१५
योऽयमश्वः पताकेय (**अनु.**) ४।२७
रणत्करणझञ्झण (**पृथ्वी**) ६।१
राज्याश्रमनिवासोऽपि (**अनुष्टुभ्**) ७।१
लीलोत्खातमृणाल (**शार्दूल.**) ३।१६
लौकिकानां हि साधूनां (**अनु.**) १।१०
वज्रादपि कठोराणि (**अनुष्टुभ्**) २।७
वत्सायाश्च रघूद्वहस्य (**शार्दूल.**) ४।३२
वपुरवियुतसिद्धा (**मालिनी**) ६।२४
वसिष्ठ एव ह्याचार्यो (**अनुष्टुभ्**) ७।१४
वसिष्ठाधिष्ठिता देव्यो (**अनुष्टुभ्**) १।३

वसिष्ठो वाल्मीकिर्दशरथ (शि.) ६।३९
वितरति गुरुः प्राज्ञे (हरिणी) २।४
विद्याकल्पेन मरुता (अनुष्टुभ्) ६।६
विना सीतादेव्या किमिव (शि.) ६।३०
विनिकर्तित एष वीर (औपच्छ.) ५।८
विनिश्चेतुं शक्यो न सु (शिख.) १।३५
विरोधो विश्रान्तः प्रस (शिख.) ६।११
विलुलितमतिपूरैर्बाष्प (मालि.) ३।२३
विश्वंभरात्मजा देवी (अनुष्टुभ्) ७।२
विश्वंभरा भगवती (वसन्त.) १।९
विस्रम्भादुरसि निपत्य (प्रह.) १।४९
वीचीवातैः शीकरक्षोद (शालि.) ३।२
वृद्धास्ते न विचारणीय (शार्दू.) ५।३४
वेलोल्लोलक्षुभितकरुणो (मन्दा.) ३।३६
व्यतिकर इव भीम (मालिनी) ५।१३
व्यतिषजति पदार्थान् (मालिनी) ६।१२
व्यर्थं यत्र कपीन्द्रसख्य (शार्दू.) ३।४५
शम्बूको नाम वृषलः (अनुष्टुभ्) २।८
शान्तं महापुरुषसंगदितं (वसन्त) ६।७
शिशुर्वा शिष्या वा यद (शिख.) ४।११
शुक्लाच्छदन्तच्छविसुन्दरे (इंद्र.) ६।२७
शैशवात्प्रभृति तोषितां (रथो.) १।४५
श्रमाम्बुशिशिरीभव (पृथ्वी) ६।३७
स एष ते वल्लभशाखि (उप.) २।६
संख्यातीतैर्द्विरदतुरग (मन्दा) ५।१२
सतां केनापि कार्येण (अनु.) १।४१
संतानवाहीन्यपि मानु (इन्द्र.) ४।८
समयः स वर्तत इवैष (मञ्जु.) १।१८
समाश्वसिहि कल्याणि (अनु.) ७।३
संबन्धस्पृहणीयता (शार्दूल.) ७।४०
संबन्धिनो वसिष्ठादी (अनु.) १।१६
स राजा तत्सौख्यं स च (शि.) ४।१२
सर्वथा व्यवहर्तव्यं (अनुष्टुभ्) १।५
स संबन्धी श्लाघ्यः प्रिय (शि.) ४।१३
सस्वेदरोमाञ्चितकम्पि (उप.) ३।४२
सिद्धं ह्येतद्वाचि वीर्यं (शालि.) ५।३२
सीतादेव्या स्वकरकलितैः (मन्दा.) ३।६
सुहृदिव प्रकटय्य (द्रुतविलं.) ४।१५
सैनिकानां प्रमाथेन (अनुष्टुभ्) ५।३१
सोढश्चिरं राक्षसमध्य (इन्द्र.) ७।४
सोऽयं शैलः ककुभ (मन्दा.) १।३३
स्निग्धश्यामाः क्वचिदप (मन्दा.) २।१४
स्नेहं दयां च सौख्यं च (अनु.) १।१२
स्नेहात्सभाजयितुमेत्य (वसन्त.) १।७
स्पर्शः पुरा परिचितो (वसन्त.) ३।१२
स्मरसि सुतनु तस्मिन् (मालि.) १।२६
हा हा देवि स्फुटति (मन्दा.) ३।३८
हा हा धिक्परगृहवास (प्रह.) १।४०
हृदि नित्यानुषक्तेन (अनुष्टुभ्) ४।२
हे हस्त दक्षिण मृतस्य (वस.) २।१०

---